धीरसमीरे यमुनातीरे वसति वने वनमाली ।

गोपीपीनपयोधरमर्दनचंचलकरयुगशाली ॥ ध्रुवपद ॥

इतिपद्यार्थ पाठः कुचचिदस्ति गोपीपीनपयोधरयोर्मर्दने न चंचलेन करयुगेना स्यः शालीतिविख्यातः हेराधे यमुनातीरेवने यमुनातीर विषयेवने अथवा वेतसवनेवनमाली श्रीकृष्णो वसतिकिंभू तेवने धीरः मंदः समीरः वायुर्यत्रयेतेन वायोस्त्रैविध्यमुक्तंतस्याश्च स्यानोत्कंठजानि नाइति ध्रुवपदम् हेनितंविनित्वंतंवनमालीनमनुस र अनुगच्छगमन विलंबन अभिसारायकालातिक्रमंनकुरुमाकु र्याः हे नितंबिनि वृहन्नितंबत्वाच्चलितुंनशक्नोनीति त्वांत्वरयति किंभूतंरतिः संभोगसुखंसारमुत्कृष्टंयत्र अभिप्रेयतेऽस्मिन्नित्य भिसारः संकेतस्थानंतत्रगतं प्राप्तंपुनः कथंभूतंतवमनस्तदृषी नामित्यर्थः अथवा हृदये वर्त्तमानंतंवनमालितमितियोज्यंकिंभूतंवा युरेवदृमिति केवलसुखहेतुत्वात्धामेव अपिच ॥ १ ॥

नामसमेतंकृतसंकेतंवादयतेमृ दुवेणुं बहुमनुतेतनुतेतनुसंगतपव नचलितमपिरेणुं ॥ २ ॥ ॥ ॥

नामसमेतमिति हे राधे हरिः मृदुवेणुंकोमलंवंशंवा दयतेमृदुत्वेति क्रियाविशेषणं कथंयथास्यात् तवनामाक्षरसंयुक्तं कृतसंकेतयथा स्यात्तथा चपुनः ततोवने तनुसंगतपवनचलितंरे णुं अपिबहुमनुते कथंयथाभवति अतनुआत्मनतआभवति । २

श्लोक

पततिपतत्रेविचलतिपत्रेशंकित भवदुपयानं रचयतिशयनं सचकित नयनं पश्यतितव पंथानं ॥ ३ ॥

पततीतिहेराधे कृष्णः शयनंरचयति नवपंथानमपश्य

कथंभवतिमचकितनयनंयथास्यात् किंभूतंतव पंथानं श्रांकितं भवत्यास पंथानं आगमो यत्र तं पुंवद्भवः भवती शब्दस्य पुंस्त्वं कमति यत्र अपक्षिणि पतति वृक्षांतरं गच्छति सापिपुनः कमति वृक्ष पत्रे चलतिसाति ॥३॥

मुखरमधीरं त्यजमंजीरं रिपुमिवके
लिसुलोलं चलिसखि कुंजं सतिमिर
पुंजं शीलयनीलनि चोलं ॥४॥

हे सखि राधेत्वं कुंजं चल अभिसारानुरूपां सामग्रीं प्रकाशयति मंजीरं नुपुरं त्यज किंभूतं नपुरं अधीरं अज्ञं अतएव मुखरं ... सारोचितं नजानाति अथवा साध्वेत मंजीरस्य मुखस्य यतोनिमित्त वत्रे मितिकं कुतः मंजीरं अधुना विन्यते पुनः किंभूतं के लौ कीडा यां सुलोलं अतएवरिपुमिव अपिच नीलनि चोलंनी लं कृष्णः वस्त्रं शीलय परि धेहि किं विशिष्टं कुंजं तिमिर पुंज न सहितं अथवास तिमिरंपुंजं यथास्यात्तथा चल उद्योतहीनाभिसारोयुक्तः ॥४॥

उरसिमुरारेरुपाहितहारे घनइवतर
लबलाके तडिदिवपीतेरतिविपरी
तेराजसिसुकृतविपाके ॥५॥

हेपीतेपीतवर्णे गौरित्वंमुरारेः उरसि सुकृतविपाके पुरा परिणामे राजसि राजायेप्यसि वर्तमानसामीप्येलट् किंविशिष्टे उर सि उपाहिते नहारे आरोपेन हारे कथं कास्मिन्निव तरल बलाके घनेइ वमेघइव चंचलयासि विशेषकेव तडिदिव कदारति विपरीते पुरु षायितसुरत समये उपहित हार उरः तरल बलाका घनेनोपमीयते स पीता तडिता तस्यां पुरुषायितत्वे चलत्वं ॥५॥

विगलितवसनं परिहृतरशनं घट
यजघनमपिधानं किशलयशयने पंकज

नयने निधिमिव हर्ष निदानं ॥ ६ ॥
हे राधे किं प्रालयप्रापणीये वर्तमाने यं कंजनयने पुंडरीकाक्षे
जघनं वटय आरोय किंभूतं विगलितवसनं स्वयमेव तत्र राव परिहृतर
सनं त्वक्क मेखलं अत एव वसनाभावात् आपेधानं पिधानरहितं अत
एव निधिनो पमीयते किमिव निधिमिव किंभूतं निधिं हर्षनिदानं ह
र्षस्य आदि कारणं ॥ ६ ॥

हरिरभिमानी रजनिरिदानीमियम
पियाति विरामं कुरु मम वचनं सत्वर
रचनं पूरय मधुरिपुकामं ॥ ७ ॥

अपि च हरिरिति हे राधे सत्वर रचनं शीघ्र साधनं यथा स्या
त्तथा मम वचनं कुरु किं तन्मम वचनं मधुरिपु कामं श्रीकृष्णां वांछां
पूरयन् चेत् किं स्यात् हरिरभिमानी अतो लाघवं न सहते पश्चात्त्वां त्य
क्ष्यति पश्चादपि कारिष्यसे चेत् इदानीमेव कुरु अन्यथेयं रात्रिरपि वि
रामं अवसानं याति गच्छति अभिसारिक कालोपि यास्यति ॥ ७ ॥

श्रीजयदेवे कृत हरिसेवे भणति परम
रमणीयं प्रमुदित हृदयं हरिं मति स
हृदयं नमत सुकृत कमनीयं ॥ ८ ॥ इ
ति श्रीगीतगोविंदे महाकाव्ये ए
कादशः प्रबंधः ॥

हे वैष्णवाः हरिं नमत नमस्कुरुत किंभूतं हरिं जयदेवे स
हृदयं किं विशिष्टे जयदेवे परमरमणीयं इदं पूर्वोक्तम् भणति कथं प्रमु
दित हृदयं किंभूते कृतहरिसेवे किंभूतं हरिं सुकृतमिव कमनीयं
सुकृतेन वा कमनीयं अभिलषणीयं ॥ ८ ॥

श्लोकः विकिरति मुहुः श्वासानाशाः
पुरो मुहुरीक्षते प्रविशति मुहुः कुं ॥

जंगुंजन् मुहुर्वह तांम्यातेरचयतिमु
हुः शय्यां पर्याकुलं मुहुरीक्षतेमदन
कदन क्लांतः कांतेप्रियस्तववर्तते ॥
॥१॥

इदानीं सत्वरं ममनाय प्रोत्साहयतिहे कांते तव प्रियः मद
नेनतेन कदनंग्लानिः प्रातः क्लांतः तथाविधः सन्किंकरोति त्याह
त्वंनांगतैवेतिकृत्वामुहुः श्वासान् विकिरति निश्वासधारा ः मुंचति
पुनः अम्मेमुहुर्वारंवारं आघ्राणः दिशः ईक्षते विलोकयति चव्या कुल त
या कस्याः दिश आगमिष्यतीतिसर्वादिशः एत कालम वलोक
यति तत्राप्यदृष्ट्वा वाह्ये निर्वातस्तत्रैव निकुंजत्वातिष्ठतीति मुहुर्मुहु
प्रविशति वारं वारं कुतो नागता किंकेन विनिवारिताउत कौतोभ
प्यातिज्ञापयति अथवा तथेदं विमर्शनं आगमिष्यत्येवेतिमुहुः प्रा
य्यांरं चयति तथाप्यदृष्ट्वापर्याकुलं यथास्यात्तथा ममा नुरागा
दधुना आगमिष्यत्येवेतिमुहुरीक्षतेइति कदनशब्दस्यलाक्ष्यर्थे
हरिणी छंदः दीपकालंकारः ॥१॥

श्लोकः॥ त्वद्वाक्येन समं समग्रमधुना
तिग्मांशुरस्तंगते गोविंदस्य मनोरथे
नचसमं प्रासंतमः सांद्रतां कोकानां
करुणस्वनेन सदृशी दीर्घामदभ्या
र्थना तन्मुग्धे विफलं विलंवनमसौ
रम्योभिसारक्षणः ॥२॥ ॥ ॥

इदानींसांप्रतमेवागंतुंयोग्यमितिहेतु माह त्वद्वाक्येनेति
हे मुग्धे मूढे त्वद्वाक्येनासूयामानमाहितेनसमं सहसमग्रं साम्यग्रनेन मा
धुना इदानींतिग्मांशुः सूर्यः अस्तंगतः अमूयामानसाहितः सूर्यास्तंगा

अस्पृश्यमान सहित: सूर्योस्तंगतः अभिसरणकालोपनित्यर्थः गो
विंदस्यकृष्णास्यमनोरथेनइदानींराधा आगमिष्यतीतिवांक्षयांस
मसहनमः अंधकारःसांद्रनानैविड्तांमासंतमसि अभिसरणं यो
ग्यमित्यर्थः दीर्घामदभ्यर्थ नाथो ग्रंगम्या।तामितिमदीयाप्रार्थना
कोकानांचक्रवाकानांकरुणस्वनेन विरहदवाघ्वदेनसदृशीयो
ग्यायथाकोकानांकरुण स्वनो नाना प्रकारः श्रूयतेतथामदीयाः
काकूक्तयः संप्रति कार्येभवं तीत्यर्थः तस्माद्धेतो र्विलंबनं विफलं
असौ अभिसारक्षणे अभिसारकालोरम्योगमनयोग्य इत्यर्थः स
हो क्तिरलंकारः शार्दूलविक्रीडितंवृत्तं ॥२॥

श्लोक॥ आश्लेषादनुचुंबनादनु
नखोल्लेखादनुस्वांतजात प्रोद्बो
धादनुसंभ्रमादनुरतारंभादनुप्रीत
योः अन्यार्थंगतयोर्भ्रमान्मिलित
योः संभाषणै र्जानतो र्दंपत्योर्निशि
कोनकोनतमसि व्रीडाविमिश्रोर
सः ॥३॥

अभिसारे रसाधिक्यंभवतीत्याह आश्लेषादितिदंपत्यो
र्जायापत्योस्तमसि अंधकारे व्रीडाविमिश्रोलज्जायुक्तः कःकः
रसोनभवेत्इतिन अपितुमव्रीडाःसर्वएव शृंगारादिः रसोभवत्येव
कंथंभूतयोर्दंपत्योः अन्यार्थंपरस्त्रीपरपुरुषार्थंगतयोःसंकेतस्था
नंप्राप्तयोःपुनः कीदृशयोःभ्रमाद्भ्रांतेःगाढांधकारेसमान्मिलितयोः
संगतयोः अनंतरं आश्लेषादि विशेषणानियोजनीयानितत्रएवंसंभो
गक्रमः वयम आलिंगनंततश्चुंबनंतमोनखक्षतं ततःकामोद्बोधः
ततः संभ्रमः ततोमैथुनंततःप्रीतिस्ततोभावनमितिज्ञानमाह आ
श्लेषादीति आश्लेषादालिंगनादनुतः ॥ ॥ ॥ ॥ ॥

श्चान्नखोल्लेखादनु नखक्षतात् पश्चांतजात्योद्दो धादनु कामवे धात्पश्चात्संभ्रमादनुवेगात् पश्चाद्रताराभात् अनुसुरद्योगात् पश्चात्प्रीतयो स्तृमयोः पुनः कीदृशयोः संभाषणैः शला पैजान ठोन ममेयंभार्यानायं मम पतिरिति ॥३॥

श्लोकः सभय चकितं विन्यस्यंतीदृ
शाति मिरेपथि प्रतितरु मुहुः स्थित्वा
मंदं पदानि वितन्वतीं कथमपि रहः
प्राप्ता मंगैर नंगरंगैभिः सुमुखि
सुभगः पश्यन् सत्वा मुपे तु कृ
तार्थ ताम् ॥४॥

इदानींत्वल्लाभात्कृष्णः कृतार्थोभवात्वित्याह सभयेतिहे सुमुखि सुवदने राधे सुभागः सौभाग्यवान् स कृष्णा त्वांपश्यन् कृतार्थतां उपेतुप्राप्नोतु कीदृशींत्वां तिमिरे अंधकार साहिते पथिमार्गे सभय चकितं भयंविस्मयाभ्यां सहितं यथास्या त्तथा दृशां नेत्रं विन्यस्यंतीं निरीक्षयंतीं निविडांधकार दर्शनाद्भय अंधाकारेनिः शंकागमना द्विस्मयः पुनः स्थित्वा मंदं शनैः पदानि चरणान्यापातन्वितन्वतीं मे प्रियतमो अमेवागमिष्यतीति मंदंचरणारविंदं धारयंतीतिभावः पुनः कीदृशीं कथमपि अंधकार स्थाने विहृत्वा त्केनापि मकारेण रहः एकांतस्थलं प्राप्तांपुनः कीदृशीं कामस्ययस्तरंगः पुनरुद्बोधः सयेशुतैः कामोल्लासिभिरंगैर्हस्त पादादिभिरुपलक्षितां उपलक्षणे तृतीया ॥४॥

श्लोक राधामुग्ध मुखचार विंदम
धुपश्चलो क्यमौलि स्थली ने प
थ्यो चितनो नरत्न भवनी भार
वतार क्षमः ॥५॥

स्वच्छंदं व्रजसुंदरी जनमनस्तोषप्रदो
षश्चिरं कंसध्वंसनधूमकेतुरवतु त्वां
देवकीनंदनः ॥५॥ इति श्रीकविरा
ज श्रीजयदेव कृते गीतगोविंदे महा
काव्ये अभिसारिकावर्णने साकांक्ष
पुंडरीकाक्षो नाम पंचमः सर्गः ॥५॥

इदानीं कविः सर्गांते भक्तजनमाशीर्वादयति राधेति देवकी
नंदनः श्रीकृष्णः त्वां भक्त चिरं अवतु दुरितात् रक्षतु कीदृशः कृष्णः रा
धाया मुग्धं सुंदरं यन्मुखारविंदं मुखकमलं तस्य मधुपो भ्रमरः ध्वनी
तत्वात् मुखपानकर्तृत्वात् पुनः कीदृशः अवन्याभारावतारक्षमः सम
र्थः अवनीभारावतारांतकः इति वा पाठः तदा ऽवन्या भुवः भाररूपो ऽ
वतारो एषाम् असुराणां तेषां अंतको नाशकः पुनः कीदृशः स्वच्छंदं ना
स्वाधीनानां व्रजसुंदरीजनानां गोपीनां मनस्तोषे चित्तसंतोषे दोषाश
शिमुखमिव रात्रिमुखे हि नायिकानुरक्त्यति पुनः कीदृशः त्रैलोक्यस्य
लोकत्रयस्य यामौलिस्थली वृंदाटवी तस्याने पथ्यो चितमलंकार
योग्यं नीलरत्नमिवास्थितः पुनः कीदृशः कंसस्य मातुलस्य मारणे
धूमकेतुरिवास्थितः ॥ राधागमने साकांक्ष इत्यर्थः ॥५॥ इति श्री गीत
गोविंद टीकायां पंचमः सर्गः ॥५॥

## अथ षष्ठः सर्गः प्रारभ्यते

श्लोक अथ तां गंतुमशक्तां चिरम
नुरक्तां लतागृहे दृष्ट्वा तच्चरितं गो
विंदे मनसिजमंदे सखी प्राह ॥१॥

अथेति अथ शब्दो मंगलार्थः अनंतरं वा सखी गोविंदे कृ
ष्णाति कमागत्येत्यर्थः तच्चरितं राधाचरितं प्राह उक्तवती किं कृ
त्वा लतागृहे तां राधां गंतुमशक्तां दृष्ट्वा कीदृशीं राधां चिरं अनुरक्तां

अनुरागिणीं कीदृशीं गोविंदे मनसिजेन कामेन मंदे पीडिते ॥१॥

अथ द्वादशः प्रबंधो गुणकरी रागेण रूपक तालेन गीयते ॥ ॥

पश्यति दिशिदिशि रहसि भवंतं त्वद धरमधुरमधूनि पिबंतं ॥१॥ नाथहरे जयनाथहरे सीदति राधा वासगृहे ॥ ध्रुपद ॥

गुणकरी रागः राग लक्षणं स्तीन्सुकार्ता तपथ भनी क्षामाला पयंती मृदु पुष्पतल्पे दूतस्तनः प्रेरित दृष्टिरार्तप्रियामानतु गौणकरी प्रदिष्टाइति अस्मिन्वासकसज्जावर्णन वासवेश्मनि कल्पिततल्पे वाससमागमविधि विदधाना पश्यति प्रियसमागमप्राप्यां पश्यतिस्म प्रियवासकसख्यां दूतिपश्यतीति हे नाथ हे हरे द्विरुक्तिः साराधानव वासगृहे सांकेतिकनिकुंजमंदिरे त्वत् त्वतः हेतोः सीदति अवसन्ना भवति कथमित्यत आह साराधा एकांते स्थिता सती दिशिदिशि भवंतं त्वां पश्यति अवलोकयति कीदृशं त्वां अधरवत् नायकाधरामृतवत् मधुराणि मधूनि माध्वी कानि पिबंतं ॥१॥

त्वदभिसरणरभसेन वलंती पतति पदानि कियंति चलंती ॥२॥

नन्वेवं चेत्तर्हि किमिति नागत्येत्यत आह त्वदभिसरणे तवाभिसारे रभस उत्साहस्तेन वलंती अभिमुखीभवंती कियंती कपि यानि पदानि चलंती सती पतति त्वद्विरह मूर्च्छया गंतुं असमर्थेत्यर्थः ॥२॥

विहित विशद बिसकिसलय वलया जीवति परमिह तवरति कलया ॥३॥

हाकष्टमेवंचेदप्राक्तानर्हि कथंजीवतीत्यत आह हे कृष्ण-मराधानपरतेः कलयासुरतलेखचिंतनेनइह समये परंकेव लंजीवतिजीवन हेतुरन्ये नास्तीत्यर्थः कीदृष्टी विहिताः विपदाष्ठुभ्राविसकिसलयाः मृणालांकुराम्बवलयाः कंकणानि यस्याः सा ॥ ३॥

मुहुरवलोकितमंडन लीलामधुरि
पुरहमितिभावन शीला ॥ ४॥

मुहुरितिकाकीदृष्टीपूर्वपदेनान्वयःपुनःपुनः अवलोकितामंडनलीलाअलंकारविलासोययालेन विनानिरर्थकमितिपुनःपुनः वदतिपुनःकोदृशी अहंमधुरिपुः कृष्णइतिभावनंध्यानमेवपूर्णलंस्वभावः सहृत्वंयस्याः सा ॥ ४॥

त्वरितमुपैतिन कथमभिसारं हरि
रितिवदतिसखीमनुवारं ॥ ५॥

तदेवाह त्वरितमितिहरिः मच्चितापहारीअभिसारं संकेतस्थलंत्वरितंशीघ्रं कथंकस्माद्धेतोः नोपैतिनागच्छतीत्यनुवारंसखीवदति ॥ ५॥

श्लिष्यति चुंबति जलधरकल्पं ह
रिरुपगतइतितिमिरमनल्पं ॥ ६॥

अपिचश्लिष्यतीति साहरिरुपगतःप्राप्तइतिबुद्ध्याऽनल्पंबहुतिमिरमंधकारंश्लिष्यतिआलिंगतिचुंबतिचकीदृशंतिमिरंजलधरकल्पंमेघसदृशंस्निग्धत्वान्नीलत्वात्कृष्णसाम्यंतिमिरस्य ॥ ६॥

भवति विलंबिनि विगलितलज्जा
विलपतिरोदिति वासकसज्जा ७

भवतीतिभवतीत्वयिविलंबिनीविलंबं कुर्वति साति-

विगलितलज्जागतलज्जा माराधा विलपति हेनिःकृपक यमेता वंदो दास्यमपि त्वया चरित मिति विलाप्यं करोति रोदितिअश्रूणि मुंचाति को हृष्णीवासक सज्जा विहितसंविधानेत्यर्थः लक्षणं तत्क्रमेव ।।७।।

श्रीजयदेव कवेरिदमुदितं रसिकज नततनुता मतिमुदित ।। ८।। इति श्री गीत गोविंदे द्वादशः प्रबंधः ।।

श्रीजयदेवेति श्रीजयदेवकवेः उदितंभाषितं इदंगीतं रसिकजनं शृंगाररसभावनाभावितांतः करणं अतिमुदितं अतिशयेनहर्षयुक्तं तनुतां करोत्वित्यर्थः ।। ८।।

श्लोकः विपुलपुलकपालिः स्फीत सीत्कारमंतर्जनितजाडिमकाकुव्या कुलंव्याहरंती तवकितवविधाया मंदकंदर्पचिंतां रसजलनिधिमग्ना ध्यानलग्ना मृगाक्षी ।। १।।

इदानीं तस्याः त्वादेकपरत्वमाह हेहेकितवधूर्तसामृगाक्षीमृगप्रावलोचना तवरसजरस जलनिधिमग्ना त्वच्छृंगाररससमुद्रेनिमग्नालीनाबभूवेत्यध्याहारः किंकृत्वा अमंदकंदर्पस्यमहतःकामस्य चिंतास्मरणंविधायहृदिकत्वाध्यानेनतवैवचित्तेलग्ना तत्पररससागरमग्नायाश्चेष्टितमाह विपुलामहतीपुलकपाली रोमांचपंक्तिर्यस्याः साध्यानकाल्पिततवकरस्पर्शेनरोमांचवतीत्यर्थः किंकुर्वती त्वद्दत्तदंतनखक्षतादिकं परिकल्पस्फीतसीत्कारंप्रचुरसीत्कारंयथास्यात्तथाव्याहरंती अंतरभ्यंतरेजनितउत्पादितःजाडिमाविशेषोजडत्वंयस्यांक्रियायांतद्यथातथा काकुनाध्वनिनाध्वनिविकारविशेषेणाकुलंयथास्यात्तथाव्याहरंती ध्यानेनतववस्तुनां लंभनात्

स्पाननीवीवंधनोन्मोचनासक्तं परिकल्प्य मुंच मुंच न न मामेति निषेधवाक्यं वदंतीत्यर्थः ॥१॥

श्लोकः अंगेष्वाभरणं करोति बहुशः पत्रेपि संचारिणि प्राप्तं त्वां परिशंकते वितनुते शय्यां चिरं ध्यायति इत्याकल्पविकल्पतल्परचनासंकल्पलीलाशतव्यासक्तापि विना त्वया वरतनुर्नैषा निशां नेष्यति ॥२॥

अंगेष्विति एषा वरतनुः सुंदरांगी एवेति बुद्ध्या प्रत्यक्षी कृत्य वदति राधा अंगेषु हस्तादिषु आभरणं अलंकारं बहुशः करोति अनेनाकल्पः कथितः यत्रेपि वृक्षपत्रेपि संचारिणि पवनादिना चलवि सति त्वामागतं परिशंकते सर्वतो वितर्कयतीत्यर्थः अनेन विकल्पः अपि च त्वामागतं ज्ञात्वा तव कामकेलिनिमित्तं शय्यां वितनुते कुरुते अनेन तल्पः कथितः चिरं बहुकालं ध्यायति त्वदागमनोपायं चिंतयति रचनेयं दार्ष्टीना कृष्णसंगमे मया इदमिदं कर्तव्यमित्यनेन संकल्पलीलाशतमुक्तं इति पूर्वोक्तप्रकारेण आकल्पे भूषणं विकल्पस्तर्कः तल्परचना शय्यारचना संकल्पलीलाशतं एतेषु व्यासक्तापि त्वया विना त्वामृते निशां रात्रिं न नेष्यति प्रभातं प्रापयितुं समर्था न भविष्यतीत्यर्थः ॥२॥

श्लोकः किं विश्राम्यसि कृष्णभोगिभवने भांडीरभूमिरुहि भ्रातर्याहि न दृष्टिगोचरमितः सानंदनंदास्पदं ॥ राधाया वचनं तदध्वगमुखान्नंदांतिके गोपतो गोविंदस्य जयंति सायमतिथिप्राशस्त्यगर्भा गिरः ॥३॥

इति श्रीकविराज श्रीजयदेवकृतगीतगोविंदे महाकाव्ये वासकसज्जावर्णने सोत्कंठवैकुंठो नाम षष्ठः सर्गः ६

अधुनाकविः सर्गांते भक्त्या नाप्येषयति किमितिगोविंदस्य कृष्णस्य गिरः वाचः जयंति सर्वोत्कर्षेण वर्तंते को दृष्णाः गिरः सायंकाले तिथीनां प्राप्तस्यं मध्वंसात दुर्भे आसये यासां ताः व्याजोक्ति नामालंकारः कथंभूतस्य गोविंदस्य नंदांति के मंदगोपपार्श्वे नता दृक्संकेतसूचनारूपं अध्वगसुखान्तिः सूनंराधायाः वचनं गोपतः गोपनं कुर्वतः किं तद्वचनं तत्राह हे भ्राता पथिक इति कोमलामंत्रणो भांडीरभूमिरुह भांडीरनाम्नि वटवृक्षे किंविश्राम्यसि विश्रामं माकुथाः तत्र हेतुः कृष्णाश्चासौ भोगी च तस्य भवने कालसर्पवासे पक्षे कृष्णस्य भोगिनः शृंगारिणो विलासगृहे पक्षद्वयेने हस्ते यमितिभ्रातृपदापादानं श्लेषालंकारश्चात्र तर्हि क्व यामीत्यत आह इतो वटात् दृष्टेतो गोचरः प्रत्यक्षो क्रियमाणां तत्सानंदं सकलार्द्धमतनंदस्यास्पदं नंदगोपगृहं न यासि अपितु याहीति राधा वचनं अध्वगसुखान्तं दांति के श्रुत्वा गोविंदस्य गिरो जयं तीत्यर्थः सोत्कंठउत्कंठासहितो वैकुंठः श्रीकृष्णोयत्र ॥ ३ ॥

## अथ सप्तमसर्गः प्रारभ्यते

श्लोकः अत्रांतरे च कुलटाकुलवर्त्मपातसंजातपातक इव स्फुटलाञ्छनश्रीः वृंदावनांतरम दीपयदंशुजालैर्दिक्सुंदरीवदनचंदनबिंदुरिंदुः ॥ १ ॥

अधुना चंद्रोदयव्याजेन राधाया विरहव्यथाधिकं वर्णयन्नाह अत्रांतर इति अत्रांतरे स्मिन्नवसरे इंदुश्चंद्रः अंशुजालैः किरणै

समूहेः वृंदावनांतरं वृंदावनमध्यप्रदेशं अदीपयत्प्रकाशितवान् विप्रलंभहेतुत्वं दर्शयन् विशिनष्टि कीदृशः इंदुः स्फुटाव्यक्तालांछनश्रीः कलंकशोभायस्य कथंभूत इव कुलटानां कृष्णाभिसारिकाना कुलस्य समूहस्य वर्त्मघातः संकेतमार्गप्रतिरोधस्तेन संजातमुत्पन्नं पातकं यस्य तादृश इव कुपातकत्तः कलंकोयोक्तोभवतीति चंद्रस्योद्दीपनत्वमाह पुनः कीदृशः दिशएव सुंदर्यः नायिकास्तासां वदनस्य मुखस्य चंदनविंदुः श्रीखंडतिलक इव श्वेतोतिलकोवर्तुलोभवति असतीनां चंद्रोदये गमनाभावाद्दुर्मपातः अत्ररूपको ऽलंकृती ॥१॥

श्लोकः प्रसरति शशधरबिंबे विहितविलंबे च माधवे मधुरा विरचित्तविविधविलापं सापरितापं चकारोच्चैः ॥२॥

अत्र विप्रलब्धा नायिका वर्ण्यते तल्लक्षणं भरते प्रविलसदनुरागा दूतिकां प्रेक्ष्य पूर्वं सरभसमपिधाय क्वापि संकेतभूमौ नामिलतिखलु यस्याः वल्लभोदैवयोगात् प्रवदति भरतस्तां नायिकां विप्रलब्धां प्रसरतीति साराधा विरचितः कृतः विविधो नाना प्रकारो विलापो यत्र उच्चैर्महांतं परितापं दुःखं चकार कृतवती क्वसति शशधरबिंबे चंद्रमंडले प्रसरति उज्ज्वलति सति माधवे कृष्णे विहितविलंबे संकेतागमनं प्रति कालातिक्रमं कृतवति सति २

अथ त्रयोदशः प्रबंधो गौड मालवरागेण प्रति मठतालेगीयते

कथित समयेपि हरिरहहनययौ वनं मम विफलमिदमनरूपमपि यौवनं १ यामिहे कमिह शरणं सखीजनवचनं

वंचिता ॥ ध्रुपद ॥

विलापमेवगीते नाहं कथितेगीतस्यास्यमालवगौडी राग: प्रतिमंठस्तुताल: हे इतिस्वचित्तसंबोधनं इह निर्जनेवनेसखीजनस्यवचनै: कृष्णागमनोवेदकेवीचिताप्रतारिता अहंकंपुरुषंशरणं शसेतास्यामिगमिष्यामिकिंकृतमेवजलमेवशरणंयामिजलप्रवेशोवरमित्यर्थ: किमित्यतआह अहहेत्वाश्चर्येहरि: कृष्ण: कथितसमयेपिउक्तकालेविपन वृंदावनं संकेतस्थाननयरोनजगाम कृष्णोपभोगाभावात् ममैतदनुरूपंयोग्यमपियौवनंविफलंनिरर्थकम्

यदनुगमनायनिशिगहनमपिशीलितं तेनममहृदयमिदमसमशरकीलितं ॥२॥

यदितिमयायस्य कृष्णस्यानुगमनायसुस्तेन संतोषाययित्तुनिशिरात्रौगहनमपिनिर्जनवनमपिशीलितंसेवितंतेनकृष्णेनहेनाममइदंहृदयं मदीयंचित्तं असमशरेण कामेनकीलितं विद्धं कृष्णागमनाभावात् ॥२॥

मम मरणमेववरमतिवितथकेतना किमितिविषहामिविरहानलमचेतना ॥३॥

ममेतिइहवने अचेतनाज्ञानसून्याविरहानलं वियोगाग्निंकिमितिविषहामिसहामितस्मान्ममरणंएववरंश्रेष्ठंमरणेविरहानलाभावात् कीदृशी अहं अतिवितथं अतिव्यर्थमेवशरीरंयस्या: कृष्णोनशरीरसौंदर्योपभोगाभावात् ॥३॥

मामहह विधुरयतिमधुरयामिनी कापि हरिमनुभवति कृतसुकृतकामिनी ॥४॥

मासितिअहहेति दुःखानुकारे मधुरमधुयामिनीमनोज्ञा वसं
तरात्रिर्मां विधुरयत्ति विकलयतिकापि कृतंसुकृतं पुरायंययाता
दृशी कामिनी कांतां हरिं कृष्णमनुभवति उपभुंक्ते ॥४॥

अहह कलया मिवलयादिमणिभू
षणं हरिविरह दहनवहने नवहु
दूषणम् ॥५॥

अहहेति अहंवलयादिमणिभूषणं कंकणप्रभृतिमुक्ता
लंकारं हरिविरह दह नवहनेन कृष्णवियोग धारणेनहेतुनाब
हुदूषणं अतिप्रायापरं कलयामिमन्ये प्रियदर्शने नस्त्रीणांअलं
कारसा फल्य मितिभावः॥५॥

कुसुमसुकुमारतनुमतनुशरली
लया स्रग पि हृदि हंतिमामतिवि
षमशीलया ॥ ६ ॥

कुसुमेति स्रगपि पुष्पमालापि अतनुशरलीलायांकंदर्प
वाणविलासेनमां हृदि हंति किंदृशीमां कुसुमवत्सुकुमारो कोम
लातनुः शरीरं यस्याः साकी दृश्या अनतुशरुलीलया अतिविषमं
अति दारुणंशीलंस्वभावो यस्याः तयावाणेन हिंसतं क्रियतेन पु
ष्पादिना ॥६॥

अहमिह निवसामिनगणितवन
वेतसा स्मरति मधुसूदनोमामपि
नचेतसा ॥ ७॥

अहमिति गणितवनवेतसमगणितावासिवनं कृष्णमन्वेषयं
त्यापरेमंस्यां तावनवेतस वृक्षाययासा अहं इह कुंजेकिंनिव
सामि अपति वसाम्येव अहंतुनअसमर्था शिरश्चालने पिएवंवि
धामपि मांमधुसूदनः कृष्णमनसापिनस्मरति आश्चर्य मित्य

र्थः ॥७॥

हरिचरणशरणजयदेवकविभार
तीवसतुहृदियुवतिरिवकोमलक
लावती ॥८॥ इति श्री गीतगोविंदे च
तुर्दशः प्रबंधः ॥

हरीतिहरिचरणौ रक्षितारौयस्यसचासौ जयदेवकविस्तस्य भारती गीतरूपा सरस्वती भक्तानां हृदि मनसि वसतु की दृशी भारती कोमला अनेकुरवर्णा कलावती कवित्वकलायुक्ता च केवयुवतिरिव यथा नायक हृदये कोमलकलावती सुकुमाराङ्गी चतुःषष्टि-कामकलायुक्ता घनापिका वसति ॥८॥

श्लोकः त्वत्किं कामपि कामिनीमभि
सृतः किं वा कला केलिभिर्बद्धो ब
धुभिरंधकारिणि वनोपांते किमुद्भ्रा
म्यति कांतः क्लांतमना मनागपि
पथि प्रस्थातुमेवाक्षमः संकेतीकृ
तमंजुवंजुललता कुंजे पिय न्नाग
तः ॥१॥

कृष्णस्य विलंबेतर्कमाह तात्किमितिकांतः कृष्णः संकेतीकृतः अभिसरणस्थानं संपादितः योमंजुर्मनोहरः वंजुललताकुंजः वेतसलता गृहं तस्मिन्नपियस्मान्नागतः नापातः तस्मात्कारणात्कामपि कामनीनायिकामभिसृतः तदभिमुखं गतः किं वा यथा वंधुभिर्मित्रैः कलाकेलिभिः हास्यादिक्रीडाभिर्बद्धः यांत्रितः अथवा अंधकारिणि तमोयुक्ते वनोपांते किंभ्राम्यति तमसि मार्गभ्रमात्भ्रमणं युजतामेव अभ्यस्तस्य भ्रमाभावइतिचेत्तत्राह क्लांत मनाः मन्निमित्तं सम्यक् क्लांतं मनः करणं यस्य सन् पथिमनागपि अल्पमपि +

मस्थांतु आगंतुं अक्षम: किं असमर्थः किं अत्र अपिशब्दः किमर्थः उक्तावेयं नापिका उक्ता भवति सायस्याः सकेतं नागतः प्रियः तस्य नागमने हेतुं चिंतयंत्या कुलायथेति संग्राया सोपालंभं करोयम्॥ २॥

अथागतं माधवमंतरेण सखीमियं वीक्ष्यविषादमूकाम् विशंकमाना रमितं कयापि जनार्दनं दृष्टवदेतदाह ॥२॥

अथेति अथानंतरं इयं राधा माधवं कृष्णमंतरेण विना आगतां सखीं वीक्ष्य दृष्ट्वा एतद्गीतेन वक्ष्यमाणमाह कीदृशी सखी विखादेन कार्योसिन्ध्यामूका वक्तुमक्षमां कीदृशी राधा जनार्दनं कृष्णं कयापि कामिन्या रमितं क्रीडितं विशंकमाना तर्कयंती कथं दृष्टवत् कामिन्या सहितं कृष्णं दृष्ट्वेत्यर्थः। यद्वा दृष्ट्वाभिघोयते तथा प्राहेत्यर्थः। उक्तिः एषा उन्मादतः अत्रोपेंद्रवज्रा वृत्तम्॥२॥

अथ चतुर्दशप्रबंधो वसंतरागेण एकतालीताले गीयते ॥ १४

स्मरसमरोचितविरचितवेषा गलितकुसुमदलविलुलितकेशा ॥१॥

कापिचपला मधुरिपुणा विलसति युवतिरधिकगुणा ॥ ध्रुवपदं ॥

दृष्टवादेदुक्तं तद्गीतेनाह गीतस्यास्य वसंतरागः स्मरेति हे सखी कापियुवतिः कामिनी मधुरिपुणा कृष्णेन सह विलसति क्रीडति कीदृशी सा अधिकगुणा अतिशयित सौंदर्यादिगुणैर्युक्ता स्मरसमरोचितः काम युद्धयोग्यः विरचितः कृतः वेषोलंकारादिर्यया सा पुनः कीदृशी गलितानि कुसुमानि येभ्यः तादृशाः दरविलुलिता ईषद्विलस्ततो व्यस्ताः केशाः यस्याः सा विपरीतरति युक्ता ॥१॥

हरिपरिरंभणवलितविकारा कु
चकलशोपरि तरलितहारा ॥२॥

हरेः परिरंभणे नालिंगने नवलितः सभक्तो ललितो मनोह
रो वा वकारो कामभावो यस्याः साकुच कलशयो रुपरिस्तन घट यो
मस्तके तरलितश्चंचलोहारो यस्यासा ॥२॥

विचलदलकललितानन चंद्रा तद
धरपानरभसकृततंद्रा ॥३॥

विचलदिति विलाद्भिः कंपमानैरलकैः चूर्णकुंतलैः ललितः
सुंदरः आननचंद्रो मुखचंद्रो यस्याः सा पुनः कीदृशी तस्य कृष्णास्य
ओष्ठपानहर्षेण कृता तंद्रा रतिसुखानुभवात्तिनिद्राय या सा ॥३॥

चंचलकुंडलदलितकपोला मुख
रितरसनजघनगतिलोला ॥४॥

चंचलेति चंचलाभ्यां कुंडलाभ्यां दलितौ संघृष्टौ कपोलौ
यस्याः सा पुनः कीदृशी मुखरिता शब्दसहिता रशना कांचीयस्मि
न् जघने तस्य गत्वा चांचल्येन लोला चंचला ॥४॥

दयितविलोकितलज्जितहसिता
बहुविधकूजितरतिरसरसिता ॥५॥

दयितेति दयितस्य कृष्णास्य विलोकनेन मुखवीक्षणेन ल
ज्जितं संजातलज्जं हसितं हास्य यस्याः सा पुनः कीदृशी बहुविधं
पिकशिखिकलहंसादीनामिव नानाप्रकारं कूजितं यत्र एतादृ
शो रतिरसः क्रीडारसस्तेन रसिता हृष्टा ॥५॥

विपुलपुलकपृथुवेपथुभंगा श्वसि
तनिमीलितविकसदनंगा ॥६॥

विपुलेति विपुला बहुलाः पुलका रोमांचा यस्याः पृथुर्महा
न् वेपथुः कंपो भंग इव यस्याः सा च पुनः कीदृशी प्रश्वसितं सुरतापासे

नर्जानि लोनि: श्वास: निमीलितं परमानंदावा स्याजनितं नेत्र नि मीलितं चत्ताभ्यां विकसन्प्रकटीभवन् अंनग: कामोरे तोलक्षणो यस्या सानिमी नेत्यनेन नस्युन काल: सूचित: ॥ ६

श्रम जल कणभरसुभगशरीरापरि
पतितोरसिरतिरण धीरा ॥ ७॥

श्रमेति श्रम जल कणभरेण सुरतायासचर्म जलाधिक्ये नसुभगं मनोज्ञं शरीरं यस्या: सा एतेन सात्विकभावोत्पाते: सूचि तासात्विकाभावा: पूर्वमुक्ता: पुन: कीदृशी उरसिपरिपतिता कृ ष्णवक्षस्थलं प्राप्य स्थितारति: सुरतरंण द्रवतत्रधीरा ॥ ७॥

श्रीजयदेवभणितंहरिरमितं कलि
कलुष जनयतु परिशमितं ॥ ८॥
इति श्रीगीतगोविंदे चतुर्दश:
प्रबंध: ॥

श्रीजयदेवेति श्रीजयदेवभणितमुक्तं वर्णितामित्यर्थ: य द्वरे: रमितं कृष्णस्य संभोग: तत्कले: कलियुगस्य कलुषं पापंगाय कानां श्रोतॄणां च परि समितं ध्वंसं तंजनयतु शमनं करोतु ॥ ८॥

श्लोक: विरहपाडु मुरारिमुखांबु
जद्युतिरयं तिरयन्नपिवेदनां विधु
रतीव तनोति मनोभुव: सुहृदये हृद
ये मदन व्यथां ॥ १॥

विरहेति अयेहे सखि चंद्र दर्शन विषादेन सखीं माते ब्रूते अ यं विधुश्चंद्र: मम हृदये मदनव्यथां कामपीडां अतीवात्यर्थेन तनो विस्तारयति गृहीपक विभाषन त्वात् कीदृशो विधु: विरहेणम द्वियोगेन पांडु धूसरं यन्मुरार: मुरवांबुजं कृष्णस्य वदनकमलं तस्य द्युतिरिव द्युतिर्यस्यत: पुन: कीदृश: वेदनामपि तिरयन् आच्छादयन्बाज़

नकत्वेहे तुमाहमनोभुवः कामस्य सुहृन्मित्रं ॥१॥

अथपंचदशप्रबंधोगुर्जरीरागेण

एकतालीतालेगीयते

समुदितमदनेरमणीवदनेचुंबनव
लिताधरे मृगमदतिलकंलिखति
सपुलकंमृग मिवरजनीकरे ॥१॥
रमते यमुनापुलिन वने विजयीमु
रारिरधुना ॥ ध्रुवपद ॥

पूर्वंगीतेनकस्याश्चिद्विपरीतरत्युक्तं अधुनाकस्याश्चित्स्वा
धीनभर्तृकायानायककर्तृकां क्रीडामाह समुदितेति स्वाधीनभ
र्तृकालक्षणंयस्यारतिगुणाकृष्टः पतिः पार्श्वंनमुंचति विचित्रवि
भ्रमैर्युक्ता स्वाधीनपतिकायथा इतिगुर्जरीरागः हे सखि अधुना
अस्मिन्कालेयमुनापुलिनेयद्वनंतस्मिन् विजयी जयशीलो मुरारिः कृ
ष्णो रमते क्रीडतिकथंरमत इत्यत आह रम्यतेस्यामितिरमणी तस्याः
सुरवेसपुलकं रोमांचस्याहितं यथास्यात्तथा मृगमद तिलकं कस्तू
र्याः तिलकं लिखति कीदृश्योवदने समुदितः समुपचितः मदनः
कामोयत्रसकामोद्दृत्यर्थः चुंबनेनवलितः सुमुखो कृत संकोचि
तः अधरोयस्यतस्मिन् चुंबनंदत्वा तिलकं लिखतीत्यर्थः काम्मिं
न् कई वरजनीकरो चंद्रे मृगमिवलिखतीत्यर्थः ॥२॥

घनचयरुचिरेरचयतिचिकुरेतरले
ततरुणानने कुरवककुसुमं चपला
सुषमरतिपतिमृगकानने ॥२॥

घनेतितस्याःघनचयरुचिरे मेघसमूहमनोहरे चिकुरेकेश
जालावेकवचनं कुरवककुसुमं अम्लानंपुष्पंवाकोटिपुष्पंवारचय
तियथास्थानमर्पयति पुनः कीदृशे तरलेतानिचंचलीकृतानितरुण्या

नामान नानि सुखानियेन अतिसुंदरतयावी क्षणार्थे कीदृशं कुसुमं चपलावत् विधुदिव सुखमाप्नोभायस्यलक्ष्यलाक्षित या लोहित त्वाद्धविद्यु त्साम्यंपुन: कीदृशोरतिपति: काम: सएवमृगस्तस्यका नने यथा मृग वासो वने तथा चिकुरे काम इति कामजनके इत्यर्थ: आस्मिन्ने वमेघे विद्यु द्र वाति तरुणानां मेघ समय: कामजनक इति मेघोदये हरिणा नामाति सुख मनुभ्यते ॥२॥

घटयति सुघने कुचयुगगगने मृगमद
रुचिरूषिते मणिसरममलं तारक
पटलं नखपद शशिभूषिते ॥३॥

घटयतीति सुघने निविडे कुचयुगगगने स्तनद्वया काशे- अमलं निर्मलं मणिसरं मुक्ताहारं मेव तारकपटल नक्षत्रसमूहं घट यति योजयति मृगमद रुचि: कस्तूरिका दीप्ति स्तया रूषिते पुन: की दृशे नखपदं नख क्षतं तदेव शशी द्वितीया चंद्रस्तेन भूषिते अलं कृते गमनपक्षे शोभिता घना मेघा यस्मि न्निमन्नमूतोयमार्थे ॥३॥

जितबिसशकले मृदु भुजयुगले कर
तलनलिनीदले मरकतवलयमधु
करनिचय वितरति हिमशीतले ४

जितेति मृदु भुजयुगले कोमलबाहु द्वये मरकतवलयं म रकतखचितं कंकणमेव मधुकरनिचयं भ्रमरसमूहं वितरति दद दाति विचरतीत्यर्थ: कीदृशे भुजयुगले जित विसशकले जितं स दृशी कृतं मृनालखंडं येन पुन: की दृशे करतलमेव नलिनीदलं पद्म यंत्र यत्र हिमवत् शीतले शांता पहत्वात् पद्मिनीपत्रकल्पे विसशकले भ्रमरस मूह स्थिति नीलरूप कालंकार: ॥४

रतिगृहजघने विपुलापघने मनसि
जकन का मन मणिमयरसने तोर

णहसनंविकिरतिकृतवासने ॥५॥

स्तीतिस्ते॰ शृंगारस्यगृहे आश्रये जघने नितंबे मणिमयरसनंमुक्ता मयीमेखलांविकिरतिददाति कीदृशे जघने विपुलंमहत्तरंअपघनंशरीरस्य अतिमांसलइत्यर्थः पुनःकीदृशे मनसिज स्यकामस्य कनककल्पिते सिंहासनेइवकीदृशंमणिमयरसनं तोरणस्य वंदनमालिकायाहसनं उपहासोयस्मात् यादाराजासिंहासनेउपविशति तदावंदनमालिकावध्यतेपुनः कीदृशेकृतंदत्तंवासनंवस्त्रंयस्मिन् वस्त्रोपरिमेखलां वध्नातीत्यर्थः यद्वा कृतं कामेनवासनंस्थानंयत्र तादृशे ॥५॥

चरणकिसलये कमलानिलये नख
मणिगणपूजिते बहिरपवरणं याव
कभरणं जनयति हृदयोजिते ॥ ६ ॥

चरणेति चरणकिसलयं पदमेव पल्लवं तस्मिन् यावकभरणं अलक्तकपूरणं जनयति करोतीत्यर्थः कीदृशे चरणकिसलये हृदियोजित कृष्णानुरागातिशयात् स्वहृदयमर्पिते स्वहृदयेतस्याश्चरणं कृत्वा यावकं रचयतीत्यर्थः कीदृशे हृदि कमलायाः निलये आश्रये कीदृशे किसलये नखा एव मणिगणाः पुष्परागादिरत्नसमूहास्तैः पूजिते अर्चिते कीदृशं यावकाभरणं बहिरपवरणं वाह्यमाच्छादकं यत्त द्विनस्तीति ॥ ६ ॥

स्मयति सुदृशां कामपि सदृशां खल
हलधरसोदरे किमफलमवसं चिर
मिह विरसं वद सखिविटपोदरे । ७ ॥

स्मयतीति हे सखि खले दुर्जने बलभद्रस्य सोदरे भ्रातरि कृष्णे कामपि सुदृशां शोभने दृशौ नेत्रे यस्यास्तां नायिकां सदृशां यौवनरूपगुणादिभिस्तुल्यां यथास्यात्तथा स्मयति सति कीदृशि सति इह विटपोदरे लतागृहे अफलं निष्प्रयोजनं चिरं सरसं रसहितं यथास्यात्तथा चिरं

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri



वह काले किमत्र मंस्यतास्मिहे सखी त्वंवद कथयइत्याह कस्मा सोदरइति भाभिप्रायंखलइति कोर्थाविभावना ॥७॥

दुःखस्वभणाने कृत हरिगुणाने मधुरि
पुपदसेवके कालियुग चरितंमवस
तु दुरितं कवि नृप जय देव के ॥८॥
इति श्रीगीतगोविंदे पंचदशःप्रबंधः

इहमधिककवीनां नृपजयदेवकेकालियुगे चरितमा चरितंक लियुगेन चरितं वा दुरितं पापं नचसतुनातिष्ठतुप्रार्थनायां लोट् कीदृशे रसस्य शृंगाररसस्यभणानं कथनं यत्र मधुरिपोः कृष्णस्य चरण सेवके कर्तरियक् अतएवकृतं हरेर्गुणानां गुणानं चिंतनं येन ॥८॥

श्लोकः नायातः सखिनिर्दयोयदिशठ
स्त्वंदूतिकिंदूयसे स्वच्छंदं बहु
वल्लभः सरमते किंतत्रतेदूषणं मे
पश्याद्यप्रियसंगमायदयितस्याकृ
ष्यमाणंगुणैरुत्कंठार्तिभरादिवस्फु
टदिदं चेतः स्वयंयास्यति ॥१॥

कृष्णस्यागमनात् दुःखितामरवींमाप्रुवासयंत्याह नायातइति हे सखि हे दूति दूत्यकर्मकुशलेयदिनिर्दयः दयारहितः शठः धूर्तो वंचकः कृष्णोनायातः तर्हिकिं त्वंदूयसे संतापमवाप्नोषि आनागमने कारणमाह वल्लभो वल्लभास्त्रियोयस्यकः कृष्णः स्वच्छंदं स्वेच्छ यातत्रस्थानेरमते क्रीडति तेतथाकिंदूषणं कः अपराधः नकोपि त्यर्थः तर्हि कथमत्रागमिष्यतीत्यत आह पश्येतिहेसखि अद्ये दानींममइदं चेतोमनः प्रियसंगमाय कृष्णसंभोगार्थं स्वयमेवया स्यतिइति त्वंपश्य जानीहि कीदृशं चेतः दयितस्य कृष्णस्य गुणैः

सौंदर्यादिभिः आकृष्यमाणां वपुषो कृतपुनः कीदृशं उत्कंठाऔत्सुक्यं आर्तिः कामपीडा नयोः भरोतिशयस्तस्मादिवस्फुटत् वहिर्भवत् अपरमपि वस्त्व नरसंकुले स्थाने स्थितं वस्तु साकर्याद्बहिर्भवतीति स्फुवत् विदलदिति वा अन्योपि गुणैरत्नुभिराकृष्टः सन्सयातीति अत्रोत्प्रेक्षालंकारः ॥२१॥

अथ षोडशप्रबंधो देशांतरागेण रूपकतालेगीयते

अनिलतरलकुवलयनयनेन तपति न सा किसलयशयनेन सखिया रमिता वनमालिना ॥१॥ ध्रुवपद ॥

देशांकरागः अनिलेति हे सखि या नायिका वनमालिना कृष्णेन रमिता क्रीडिता सा किसलयशयनेन नवपल्लवशय्यायां न तपति नोपतप्ता भवति अथवा या वनमालिना अरमिता मादृशी सा किसलयशयनेन तपति अपितु तपत्येवेति काक्वा कीदृशेन वनमालिना अनिलेन वायुना तरलं चंचलं यत्कुवलयं नीलोत्पलं तद्वत् नयने यस्य स तेन सा हर्षसावलोकनादितिभावः अस्मिन्गीते संभोगवियोगौ ज्ञातव्यौ ॥ १॥

विकसितसरसिजललितमुखेन स्फुटति न सा मनसिजविशिखेन ॥२॥

विकसितेति विकसितं प्रफुल्लितं यत्सरसिजं कमलं तद्वन्मनोहरं ललितं आननं यस्य एवंभूतेन वनमालिना या रमिता सा मनसिजविशिखेन कामबाणेन न स्फुटति न विद्धा भवतीति संभोगे वियोगे तनु स्फुटत्येवेति काक्वा ॥२॥

अमृतमधुरमृदुतरवचनेन ज्वलति न सा मलयजपवनेन ॥ ३॥

अमृतेति अमृतवत् मधुराणि मनोज्ञानि मृदुतराणि अति कोमलानि वा वचनानि यस्य तेन वनमालिना या रमिता सा मलयज पवनेन मलयानिलेन न ज्वलति न संदीप्यते संभोगे वियोगे तु सा न ज्वलति अपि तु ज्वलत्येव ॥३॥

स्थलजलरुहरुचिकरचरणेन लुठति न सा हिमकरकिरणेन ॥४॥

स्थलेति स्थलोद्भव जलरुहाणां पद्मानां रुचिरे वरुचिर्येषां ताहृशौ करौ चरणौ च यस्य तेन वनमालिना या रमिता सा हिमकरस्य किरणेन चंद्रस्य दीप्त्या न लुठति नो न सा भवति इति संभोगे वियोगे तु न तपति ॥४॥ अपि तु न तपत्येव स्थले पद्मस्यानिलोहितत्वेनोपादानं ॥४॥

सजलजलदसमुदयरुचिरेण दलति न हृदि चिरविरहेण ॥५॥

सजलेति सजल जलदसमुदयवत् सोदक मेघोदकवत् रुचिरः सुंदरस्तेन वनमालिना या रमिता सा हृदि मनसि विरहभरेण विरहाधिक्येन न दलति न विदीर्येत इति पूर्ववत् ज्ञेयं ॥५॥

कनकनिकषरुचिशुचिवसनेन श्वसिति न सा परिजनहसनेन ॥६॥

कनकेति कनकनिकषस्य सुवर्णरेखाया रुचिरे वपुशुचिविमलं वस्त्रं यस्य पीतांबरेणेत्यर्थः तेन वनमालिना या रमिता सा परिजनहसनेन लोकहास्येन सखीहास्येन न श्वसति संभोगे वियोगे तु परिजनहसनेन सपत्नीहसनेन न श्वसति अपि तु प्रश्वसस्येवाः ६॥

सकलभुवनजनवरतरुणेन वहति न सा रुजमतिकरुणेन ॥७॥

सकलेति सकलभुवने जनो वयेये जनाः युवानस्तेभ्योपि दरोण श्रेष्ठेन तरुणेन यूना अति करुणेनातिदयावता वनमालि मायारोपिता सारुजंपीडानाच हानि इति संभोगे वियोगे तु सारुजं वह त्येव कोट प्रेन कृष्णेन करुणं दयां अति क्रांतेन निर्दयं नेत्यर्थः ॥७॥

श्रीजयदेवभणित वचनमनुविद्धा
तु हरि रपि हृदयमनन ॥८॥ इति श्री
गीतगोविंदे षोडशः प्रबंधः ॥ १

अनेन श्रीजयदेवभणित यद्वचनं गीतरूपं तेन हरिः कृष्णो पि हृदयं भक्तानां चित्तं प्रविशतु पुराय दात्त्वात् को दृशां हृदयं हरि चरणचिंतनात् विनष्टपाप मितिभावः ॥८॥

श्लोकः मनोभवानंदन चंदनानिल
प्रसीद रे दक्षिण मुंच वामतां क्षणं
जगत्प्राण विधाय माधवं पुरो मम
प्राण हरोभविष्यसि ॥ २ ॥

सीदयं लक्ष्म्या निलं प्रार्थयते मनोभवेति हे चंदनानिलमलय संबंधि वातप्रसीद मनोपरि प्रसन्नो भव रेइत्या क्षेपसंबोधनं दुःखकारित्वात दक्षिण त्वं वामतां प्रतिकूलतां मुंच त्यज चंदनसंसर्गित्वात वकुत्वं नोचितमितिभावः ननु मापि वाम त्वं नास्ती त्यतः आह हे मनोभवानंदन काममानंदयतीति तद्बोधने वमत्प्रति कृत्यमाचर मीत्यर्थः यदि च वामतामपि न मुंचसि तदा हे जगत्प्राण जगतां प्राण मनक्षणं ऊ - त्यकालं माधवं पुरो विधाय कृष्णसंग त्वा मम प्राण हरो भविष्यसि प्राण गमन समये हि कृष्ण दर्शनं अति दुर्लभं इति जगतां प्राण स्य प्राण संरक्षणं मम मुचितामितिभावः दक्षिणस्य वामत्व जगत्प्राणस्य प्राण हरत्वमिति विरोधनामालंकारः ॥२॥

श्लोकः रिपुरिव सखी संवासोयंशिखीवाहिमानिलो विषमिवसुधारश्मि दूरं दुनोति मनोगमम् हृदयमदये तस्मिन्नेवं पुनर्वलते बलात् कुवलयहृशां वामः कामो निकाम निरंकुशः ॥२॥

पुनरपि सखी मत्याह रिपुरिति सं अयं शखी संवासः सखीभिः सह सम्यक् वासो वास स्थानं रिपुरिव शत्रुरिव मम मनोति संतापयति हिमानिलः शीतलवायुः शिखी ववन्हि रिव मम मनो दुनोति मधार श्मि चंद्रो विषं कालकूटमिव दूरे दुनोत्यति संतापयति तस्मिन् अदये करुणा रहिते प्रिय एवं विचारितमेव मम हृदयं पुनः पुनरपि बलात् हठा द्वलते निवार्यमाणमपि तत्रैव निर्गच्छतीत्यर्थः यतः कुवलय हृशानीलोत्पलाक्षीणां कामः कंदर्पो निकामनिरंकुशः अतिशयेन स्वेच्छा चारी अपरतंत्र इत्यर्थः अतएव वामः क्रूरः तदुक्तं रसिकः रहस्ये निषिद्धे वर्तते मोहः कामो वामः स्वभावत इति सखी नारिपुवद्धिमानि लस्य वान्हेवत् सुधांशोर्विषवदिति विरोधा लंकारस्तत्र ॥२॥

श्लोकः बाधां विधेहि मलयानिल पंचबाण प्राणान् गृहाण न गृहं पुनराश्रयिष्ये किं ते कृतांतभगिनि क्षमया तरंगैरंगानि सिंच मम शाम्यतु देहदाहः ॥३॥

पुनरपि जीविन निरपेक्षत्वेन मलयानिलादीन्प्रत्याह बाधामिति हे मलयानिल चंदनवायो बाधां मम पीडां विधेहि कुरु हे पंचबाण हे काम त्वं मम प्राणान् गृहाण यथा पुनरपि अहं गृहं नाश्र

येनयास्यामितथाप्राणान्गृहाणेत्यर्थः हे कृतांतभगिनियभस्व स्व यमुने तव क्षमया प्रांत्याकिं यमभगिन्यास्तवप्रांतेनोंचितेतिभावः त्वत्तरंगैः स्वकीयैः कल्लोलैमें अंगानीयिंच प्लावय तेनमम देहदाहः शरीरतापः शाम्यतु मरणमेवभवत्वित्यर्थः ॥३॥

श्लोकः सांद्रानंदपुरंदरादिदिविषद्वृंदैरमंदादरादानम्रैर्मुकुटेंद्रनीलमणिभिः संदर्शितेंदीवरम् स्वच्छंदं मकरंदसुंदरगलन्मंदाकिनीमेदुरम् श्रीगोविंदपदारविंदमशुभस्कंदाय वंदामहे ॥४॥

इति श्रीकविराज श्रीजयदेवकृत गीतगोविंदे महाकाव्ये श्रीनागरनारायणो नाम सप्तमः सर्गः ॥

सर्गांते कविर्नमस्करोति सांद्रेति श्रीगोविंदस्यपदारविंदंश्रीकृष्णस्यचरणपद्मं वंदामहे नमामः किमर्थं अशुभस्कंदाय अशुभनाशार्थं कथंभूतंपदारविंदं सांद्रानंदा निबिडहर्षाः पुरंदरादिदिविषदः इंद्रादिदेवास्तेषांवृंदैः समूहैरमंदादरात् अतिशयितनवहुमानादानम्रैः समतान्नतियुक्तैः कर्तृभूतैः मुकुटानामिंद्रनीलमणिभिः नीलवर्णैः मणिभिः करणभूतैः संदर्शितइंदीवरभ्रमो यवत्पुनः कीदृशं स्वच्छंदं यथास्यात्तथा मकरंदवत्सुंदरंपुष्परसवन्मधुरं यथास्यात्तथा गलंत्या मंदाकिन्या वियद्गंगया मेदुरं सांद्रस्निग्धमित्यर्थः श्रीशब्द उत्कर्षार्थे नागरश्चतुरो नारायणो यत्रसः तथाशार्दूलविक्रीडितंवृत्तं ॥७॥

अथ अष्टमसर्गः प्रारभ्यते ॥

श्लोकः अथ कथमपि यामिनींविनी

स्मरशरजर्जरितापि सा प्रभाते अनु
नयवचनं वदंतमग्रे प्रणतमपि प्रिय-
माह साभ्यसूयम् ॥२॥

अधुना राधा प्रियं मानेन गतं हरिं साभ्यसूयवचनमेव मा
हअथेति अथानंतरं मंगला थेवा कथमपि सकष्टं यामिनीं रात्रिं निनी
यनीत्वा स्थिता सा राधा प्रियं कृष्णं साभ्यसूयं सेर्ष्यं यथा स्यात्तथा
हउक्तवती कीदृशी सा स्मरशरैः कामबाणैः जर्जरितापि विद्धापि की
दृशे प्रियं प्रातः समये अनुनयाय भ्रमबोधाय वचनं वाक्यं वदंतं पु
नः कीदृशं अग्रे प्रणामं तमपि नम्रमपि ॥२॥

अथ सप्तदशमप्रबंधो भैरवरागेण ॥
यति ताले गीयते

रजनिजनितगुरुजागररागकषायि
तमलसनिमेषम् वहति नयनमनुरा
गमिव स्फुटमुदितरसाभिनिवेशं
॥१॥ हरिहरि याहि माधव याहि केश
वमा वद कैतववादं तामनुसर सर
सीरुह लोचनया तव हरति विषाद
म् ॥ ध्रुवपदं ॥

अस्मिन् खंडिता नामनायिका वर्ण्यते तल्लक्षणं उल्लंघ्य
समयं यस्या द्येयानन्योपभोगवान् भोगलक्ष्म्यांकितः प्रातरागच्छेत्
साहि खंडिता २ निद्राकषायकलुषी कृतताम्रनेत्रं नारीनखव्रणविशे
षविचित्रितांगः यस्याः कुतोपि गृहमेति पतिः प्रभाते सा खंडितेति
कथिता कविभिः पुराणैः २ साभ्यसूयवचनमेव गीते नाह रजनी
ति भैरवरागः तल्लक्षणं सरोवरस्थे स्फटिकस्य मंडपे सरोरुहैः
शंकरमर्चयंती तालप्रभेद प्रतिपन्नगीता गौरी तनुर्नारद भैरवोऽयम् ॥

द्वीयं इति हरिहरि खेदानुकारे अव्ययं हे केशव याहि हे म
कोपाधिक्येनाद्विरुक्तिः कैतववादं च कपटवाक्यं मावद हे सरसी
लोचन कमलनयन तां नायिकां अनुसर गच्छ या तव विषादं हरति दू
री करोति कथं विषाद वत्वमित्याह हे कृष्ण तव नयनं नेत्र स्फुटं व्य
क्तं तस्यानुरागमिव वहति धारयति कीदृशं नतनं रजनी जनिते
न रात्रि कृतेन गुणातिशयेन जागरणागेण जागरोत्पन्न लोहितरा
गेण कषायितं आरक्तं कृतं पुनः कीदृशं रात्रिजागरेणालसो मंथ
रोनिमेषः यस्य चलनं यस्य कीदृशं अनुरागं उदितः कथितः
रसस्य अन्य कामिनी विषय श्रृंगार रसस्याभिनिवेशास्तत्परता
येन मालक्ष्मीः तस्याधवइत्यनेन तत्पतित्वेन चांचल्यं द्योतितं के
शवेत्यनेन क्लेशनाशकत्वेनापि क्लेशप्रदानुवृत्तित्वमनुचितमि
ति द्योतितं ॥१॥

कज्जलमलिनविलोचनचुंबनविर
चितनीलिमरूपम् दशनवसनमरु
णं तव कृष्ण तनोति तनोरनुरूपं २

ननु त्वदन्वेषणार्थं जागरणेन नेत्रयो र्लौहित्यमलं दुष्टं
केयेत्यत आह कज्जलेति हे कृष्ण तवारुणं तांबूलरागेण लोहि
तं दशनवसन अधरः तनोः शरीरस्यानुरूपं सादृश्यं तनोति विस्तार
यति कीदृशं दशनवसनं कज्जलेनाञ्जनेन मलिने श्यामे ये विलो
चने मे ये तयोश्चुंबनेन विरचितं कृतं नीलिमरूपं श्यामता रूपं य
स्य आरक्ताधरस्य नेत्र चुंबनेन श्यामता प्रतिपादनात् तनोरनुरू
पत्वं अन्यायां कामिन्यां कृष्णस्यानुरागः सूचितः ॥२॥

वपुरनुहरति तव स्मरसंगरखरन
खरक्षतरेखं मरकतशकलकलितक
लधौतलिपेरिव रतिजयलेखं ॥३॥

किं चवपुरिति हे कृष्ण: तव वपु: पुरीरंगति जयति रखं सुरति वि
जय मप्रास्निलेरवन यच अनुवह ति अनुकरोति की दृशं वपु: स्मरसं
गरे कामयुद्धे खराणां तीक्ष्णानां नखानां क्षता न्येवरे खायच कस्या
इवमरकतप्राकले नीलमलखंडे कलितानिर्मितायाकलधौतलि
पे: सुवर्ण विरचिताक्षरस्य विन्यासस्ये वयुगोनील त्वाम्नखक्ष
तस्कुट कन्त्वान्मरकतखंडार्पितसुवर्णाक्षरसाम्यं ॥३॥

चरणकमलदलदलक्तकसिक्त
मिदं तव हृदयमुदारं दृश्यतीव
बहिर्मदनद्रुमनवकिसलयपरि
वारम् ॥४॥

ननुमांगे विसृत्यगच्छतोमेवपुषि दनेकठकादि स्यप्रादि
वं दृश्यते न तुनरवां कामित्यत आह चरणेति उदं उदारं मनोहरं न
स हृदयं मदनद्रुमस्य कामवृक्षस्य हृदयांत गीतस्य नवाकिशल
यपरिवारं नूतनपल्लवसमूहं बहि र्देश्यतीव मकटयतीवकी दृ
शं हृदयं चरण कमला न्यस्त्रीपादपद्मात् गलनास्त्रवता अलक्त
केनसिक्तं उक्षितं किंशलयपदे नैव नूतनत्वविधानात्पुनर्नव
पदं अधत नत्वसूचनार्थरूपकालंकार श्चाच ॥४॥

दशनपदं भवदधरगतंममजनय
तिचेतसिखेदं कथयतिकथमधु
नापिमया सहतव वपुरतद भेदम् ॥५

ननुतदखेदे नत्वया एकात्म स्पृदये व्याधि विक्रिया जा
ता कथमन्यथा कल्प्यते सत्यंयदि तव मयारी क्य नस्यात दानवश
रीर गतक्षते नममवेदना नस्यादि त्याह दशनेति भवदधरगतं त
वाधरोष्ठे वर्तमानं दशनपदं अन्यकामिनी दंतक्षतंमम चेतसिखे
दं संतापं जनयति करोतीत्यर्थ: एतादृशं नवपदं तववपुरधुनापीदं

नोऽस्मयी मया सह अभेदं कथं कथयतीत्यर्थः न विद्यते भेदो यस्य पूर्वं म
यासह तव वपुषोऽभेदो नास्तीति स्थितं इदानीं तु तद्विपरीतमिति मया
सह एवेति भाव तालंकार स्यात् ॥५॥

वहिरिव मलिनतरं नव कृष्ण मनोपि
भविष्यति नूनं कथमथ वंचयसे ज
नमनुगतमसमशरज्वरदूनं ॥६॥

ननु तवापायनार्थं कमलत्रोटनं कृतवति मयि पल्लको प्रा
दायत तां भृंगेणाममाधरो दष्टो ननु दंतक्षतमित्यत आह वहिरिवेति
नूनमेवेति वितर्के हे कृष्ण तव चित्तमपि वहिरवमलिनतरं भूयामं
भविष्यतीति नूनं तर्कयामि ननु मालिन्यं त्वया कथं ज्ञातमित्यत आह
अथान्यथात्वं असमशरः कामस्तस्य ज्वरेण पीडया दूनं सुपतप्तं अनु
गतं त्वामनुसृतं मल्लक्षणं जनं कथं वंचयसे प्रतारयसि अतः कृ
ष्ण त्वं कौटिल्यमेवेति नूनमिति शब्दोपादानादुत्प्रेक्षालंकारः

॥श्लोक॥

भ्रमति भवानबलाकवलाय वनेषु कि
मत्र विचित्रं मथयति पूतनिकेव व
धूवधनिर्दयबालचरित्रम् ॥७॥

भ्रमतीति अबलाकवलाय स्त्रीयां ग्रसनार्थं भवान् वनेषु अर
ण्येषु भ्रमति अत्र स्त्रीयापे किं विचित्रं नकीमपीत्यर्थः यतः पूतनिके
व राक्षसीव वधूवधे स्त्रीवघार्थी निर्दयं दयारहितं तव बालचरित्रं
बालचेष्टितं मथयति रव्यापयति यद्वा हे वधूवधनिर्दय पीयुषानात्व
या राक्षसी हता तास्मिन् त्वयि यूनि संपति कोमलांगीनाभस्मा
कं मारणे किं चित्रमिति भावः ॥७॥

श्रीजयदेवभणितरतिवंचितखंडित
युवतिविलापं शृणुत सुधामधुरम् ॥

विवुधाविवुधालयतोपिदुरापं ॥ ८॥
इतिश्रीगीतगोविंदे सप्तदशः

॥ प्रवंधः ॥

श्रीजयदेवेति हे यिवुधाः पंडिताः श्रीयुतजयदेवेनभणि
तउक्त आसीत् रतिवंचितखंडितयुवतिविलापस्तंश्रृणुत आकर्णय
तकीदृशं विलापंसुधातोपिमधुरंमनोहरं तत्रहेतुमाह विवुधालयतोपि
स्वर्गादपिदुरापंदुर्लभंतदुक्तं तवकथामृतमिति श्रीभागवते ॥ ८॥

॥ श्लोक ॥

तदेतद्यंपथ्यंसाः प्रसरद नुरागं वाहिरिव
प्रियापादालक्तच्छुरितमरुणद्योति
हृदयम् ममाद्यप्रख्यातप्रणयभरभ
गेन कितवत्वदालोकः शोकादपिकि
मपिलज्जांजनयति ॥ १॥

तवेदमितिहे कितववंचकत्वदालोकस्तवदर्शनंप्रख्यातस्य
लोकप्रसिद्धस्यप्रणयभरस्यप्रेमातिशयस्य भंगेमनाशेनयः शोकतस्मा
दपिममअद्यकिंअनिर्वचनीयां लज्जांजनयति कीदृश्याममतवेदंहृ
दयंपश्यंदाः कीदृशं हृदयंप्रियायाः पादालक्तकेन चरणसंवधियाव
केन च्छुरितं व्याप्तं अतएव अरुणरक्ता छापादीप्तिर्यस्यतादृशं अरु
णद्योतीतिपाठे अरुणः संध्यारागस्तद्वत्तितुंशीलमस्येतितादृशंहृद
यंसमीप्स्यकृतेवहिः प्रसरदनुरागमिववाह्यप्रसरन् अनुरागोयस्य
रागोहि अरुणोवराप्यते ॥ १॥

॥ श्लोक ॥

मातनीलनिचोलमच्युतमुरः संवीत
पीतांशुकं राधायाश्चकितंविलोक्य
हसतिस्वैरं सखी ॥

मंडले व्रीडाचंचलं मचलं नयनयो
मधापराधानने स्मेरमुखोय
मस्तु जगदानंदायनंदात्मजः॥२
इति श्रीकविराज श्रीजयदेवकृते
गीतगोविंदे महाकाव्ये खंडिता व
र्णने विलक्षलक्ष्मीपतिर्नाम अष्टमः
सर्गः॥८॥

इदानीं सर्गानेकविर्भक्तानां माप्रीणयति मातरिति नंदात्म
जोयं कृष्णः जगदानंदायास्तु लोकसुखार्थं भवतु कीदृशः व्रीडाय
चंचलं लज्जया चलायमानं नयनयो नेत्रयोरंचलं अपांगं कटाक्षः
राधानने राधा मुखे आधाय अर्पयित्वा स्मेरमुखमीषद्धास्ययुक्तं
मुखं यस्य सः स्मेरमुखकारणमाह कस्मिन्सतिमानः जयसि अच्युतं
कृष्णां नीलं निचोलं वस्त्रं यस्य प्रयाम वस्त्रधरं विलोक्य दृष्ट्वा अनु चराधा
याउरः वक्षस्थलं सवीतपीतां शुकं परिधानी कृतपीतांबरं चकितं
सविस्मयं यया स्यात्तथा विलोक्य सखीसमूहे स्वैरं शनैः हसतिसति
वस्त्रपरिवर्तनमालोक्य जहासेदृत्यर्थः विलक्षदाने विस्मयान्वित
विपर्यी इतिभावस्पष्टः शब्दः शार्दूलविक्रीडितं वृत्तम्॥२॥

अथ नवमः सर्गः प्रारभ्यते

श्लोकः अथतामन्मथखिन्नां रति
रसभिन्नां विषादसंपन्ना मनुचिंति
तहरिचरितां कलहांतरितामुवाच
रहः सखी ॥१॥

समयकोपात् हरिमधिक्षिप्येदानीं कृतपश्चात्तापां सखी
आह अथेति अथा नंतरं मंगलार्थं वा सखी ता राधां उवाच कृतवती
कीदृशीं तां मन्मथेन कामेन खिन्नं दीनां पुनः कीदृशीं रतिरसेन

भिन्नां रहितां अतएव विषादेन दुःखेन संपन्नां युक्तां अतएव मुहुर्मुहुः वारं वारं चिंतितं हरेश्चरितं पुराविलासो यया तां कलहेन प्रीति कलहेनांतरितां व्यवहितां अत्र कलहांतरिता नायिका वर्णिते तल्लक्षणंभरतेनोक्तं प्राणेश्वरं प्रणयकोपभरेण लभ्यं तं चाटु कार मवधीरयद्वधार्य पश्चात् संतप्तते मदन वह्निशिखा सहस्रै वर्य्याकुलानुकलहांतरितेति सास्यादिते ॥१॥

## अथ अष्टादशः प्रबंधो गुर्जरीरागेण यतितालेगीयते

**हरिरभिसरति वहति मधुपवने किमपरमधिक सुखं सखिभवने माधवे माकुरु मानिनि मान मये ॥ ध्रु० ॥**

गुर्जरी रागः यति तालश्च हरि रिति अये हे मानिनि अभिमानवती राधे माधवे कृष्णे मानं अभिमानं माकुरु माकार्षी रिति प्रार्थनायां लो ट्यतः मधुपवने वसंतवायौ वहति सति हरिः अभिसरति स्वयमेव त्वदीयां संकेतभूमिमागच्छतीति हे सखि राधे भवने पिगृहे अपरं अधिकसुखं अतिशय सुखं किं अपि तु न किंचि दस्तनायकस्य स्वयमागमनात् कोपोन युक्त इत्यर्थः ॥१॥

**तालफलादपि गुरु मति सरसं किं विफली कुरुषे कुचकलशं ॥ २ ॥**

अपि च तालेति हे राधे तालफलादपि कठिनायनस्थौल्येन वर्तुलत्वेन च तालफलादपि गुरुं अधिकं कुचकलशं स्तनघटं किं किमर्थं विफलीकुरुषे कृष्णहस्तव्यापारपरिपीलनाभावाद्वैफल्यमितिभावः कीदृशं अतिसरसं अतिशयरसंयुक्तं तस्मिन् दृष्टे यूनां रसाविर्भावात्तु हृदयाल्हादकरमितियावत् ॥२॥

**कतिनकथितमिदमनुपदमचिरं**

वक्षीनां प्रुश्वं दूरस्त्यन: सूर्यइवाहि मांतुषार: हुतवह: अग्निरव की डाशुद: कीडासंतोया: यातना वेदना: युक्तमेव योग्य मेव नवमदी यवचनं विपरी नकारी त्वात् विरोधालंकार। शार्दूल विक्रीडितवृ तम्॥ २॥

श्लोक अंतर्मोहनमौलि घूर्णनवल
न्मंदारविस्त्रंसन: स्तब्धाकर्षण दृ
ष्टि हर्षणमहा मंत्र: कुरंगी दृशां॥
दृप्यद्दान वदूयमान दिविषद् दुर्वारदु:
खापदां भ्रंशः कंसरियो र्व्यपोहयतु
व: श्रेयां सिवंशीर व:॥ २॥
इति श्री कविराज श्री जयदेव कृ. ते
गीत गोविंद महा काव्ये मुग्धमुकुंद
वदनो नाम नवम: सर्ग:॥

इदानीं कविभक्ता नाशी षयति अंतरिति कंसरियो: कृष्णा स्य वंशीरवो वेणुनाद: व: युष्माकं भक्तानां श्रेयांसि अशुभानि व्यपोहयतु खंडयतु कीदृशो वंशीरव: कुरंगी दृशां हरिणीनय नानां अंतर्मोह नामांनो मोह: मौलि घूर्णनं साधुसाध्विति शिर: कंपेनवलन्मंदार विस्त्रंसनं गुंफितपारिजात: पुष्पाध: पतनं सा त्विकभावात् स्तब्धा कर्षणं स्तब्धस्य अनि च्छो रकर्षणं दृष्टिहर्ष णं नेत्रोत्साह: एतेषु सर्वेषु महामंत्र: वंशीरवाकर्ष सर्वा नायिका: कामभावापन्ना भविष्यंतीति भाव: पुन: कीदृशा: दर्पवद्भिर्दानवै र्दैत्यैर्दूयमाना नां दिविषदां देवतानां दुर्वारा अनिवार्या: आपद: स्व साधनी भूता: क्षिय स्तयस्ता सांभ्रंस: नाशक: वंशीरवं श्रुत्वा दुःखि ता अपि देवा: मुदमु द्वहंतीत्यर्थ: मुग्धो मूढ: अलस:॥ २

अथ दशम: सर्ग: प्रारभ्यते॥

श्लोक अत्रांतरे मसृणरोषवशामसीमनिःश्वासनिःसहमुखीं सुमुखी मुपेत्य सव्रीडमीक्षितसखीवदनां दिनांते सानंदगद्गदपदं हरिरित्युवाच ॥१॥

इदानीं सोत्कंठः श्रीकृष्णो राधां दृष्ट्वा अनुनयन्नाह अत्रेति अत्रांतरे अस्मिन्नवसरे हरिः दिनांते संध्यासमये तां सुमुखीं राधामुपेत्य समीपमागत्य सानंदानि अतएव गद्गदानि कंठादस्पष्टनिर्गतानि पदानि यस्यां क्रियायां तद्यथाभवति तथा वक्ष्यमाणं उवाच कीदृशीं राधां मसृणस्य कर्कशस्य क्रोधस्य वशां अधीनां पुनः किंभूतां असीमस्य महतो निःश्वासस्य निःसहं सोढुं असमर्थं मुखं यस्याः सातां कोपवदनामित्यर्थः पुनः किंभूतां सव्रीडं सलज्जं ईक्षितं दृष्टं सख्याः वदनं मुखं यया सातां पश्य कृपां चेष्टितमित्यर्थः ॥२॥

अथ एकोनविंशः प्रबंधो देशावराडीरागेण आडुवतालेन गीयते

वदसि यदि किंचिदपि दंतरुचिकौमुदी हरति दरतिमिरमतिघोरं स्फुरदधरसीधवे तव वदनचंद्रमा रोचयति लोचनचकोरं ॥१॥ प्रिये चारुशीले प्रिये चारुशीले मुंच मयि मानमनिदानं सपदि मदनानलो दहति मम मानसं देहि मुखकमलमधुपानम् ॥ ध्रु० ॥

उक्तमर्थं गीतेनाह वदसीति गीतस्यास्य देशवराडिरागः

अष्टतालीनाल: रागलक्षणं आरब्धगमनमुद्रानिद्रा घूर्णायमानन
यनाद्या सुखशायिनीनिजदयितेनशावण्डिभवेद्धौ रीति लघु द्रुतौ
लघु श्चैत्यष्टतालीप्रकीर्त्तितो तैलिंगो नार्थस्तु हे चारुशीले मम मोहरस
हत्ते प्रियेराधे त्वंमयिअनिदानं अकारणं मानंमुचत्यज किमितिमा
नत्यागस्तत्राह मदनानल: कामाग्नि मेममानसं दहति अत का
रणात्तत्पादे सत्क्षणमेव मुख कमलमधुपानं मुखमेवपद्मंतत्सं
बंधिमधुपानं देहि मधुना वान्हिदाह: प्रशाम्यति ध्रुवपदं हे एधेत्वं
यदि यदाकिंचिदपिवदसितदानवदं तानां या रुचि: दीप्ति: सैवकौमुदी
चंद्रज्योत्स्ना अतिघोरं अतिसयेनभयं करंदर: भयंस एवतिमिरंमध
कारं हरति नाशयति अनुचतववदनं चंद्रमा इयस: स्फुरद धरसीध
वेदीप्यमानाधरामृतार्थे तादर्थ्येचतुर्थी ममलोचनचकोरं नेत्रपक्षि
विशेषं रोचयति रुचिं इच्छां कारयति ममलोचनचकोरं चकोर: प·
क्षिविशेष: चंद्रामृतलोलुपो भवत्येव ॥ १॥

सत्यमेवासि यदि सुदति मयि कोपिनी
दाहि खरनखरशरघातं घटय
भुजबंधनं जनय रदखंडनं येन वाम
वा तिसुखजातम् ॥ २॥

मृषारोषं प्रकाशयंती माह सत्यमिति हे सुदति शोभनदंते
यदि मयिविषये सत्यमेव कोपिनी क्रोधवती आसितदा खरास्तीक्ष्णा
येनखरा: नखास्तेएवशरा नाराचास्तैर्घातं प्रहारंदेहि तेनापिचेन्न
तुष्यसि तर्हि भुजाभ्यां बंधनं घटयकुरु रदै: दंतै: खंडनं घातं ज
नय विरचय वा अथवा येनमुष्ट्यादीना सुखजातं सुखसमूहो भव
तितदेवकुरु मन्मथणां हि सापराधेषु जनेषु ताडनं बंधन खंडनाद्यो
दंडा समुचिता: ॥ २॥

त्वमसि मम भूषणं त्वमसि मम जीव

नत्वमसिममभवजलधिरत्नम् भ
वतुभवतीहमयि सततमनुरोधिनी
तत्रममहृदयमतियत्नम् ॥३॥

नतुयातिप्रियासा दंडं विदधातु किंमयात आहत्वमसीति
हे राधे त्वं ममजीवनं प्राणोसि त्वांविनास्थातुमशक्यत्वात् त्वंममभूष
णं अलंकारोसि त्वंममभवजलधौसंसार सागरेरत्नमसिजातौजातौ
यदुत्कृष्टं तद्रत्नमभिधीयते इतिस्त्रीरत्नंउक्तं इहएतादृशोमयिभव
तीसततं निरंतरं अनुरोधिनी अनुकूलाभवतु तवानुकूल्येममहृद
यंमनः अतियत्नं अतिशय यत्नयुक्तं भवितितवानुकूल्यार्थं अ
तिशयंयत्नं करोतीत्यर्थः ॥३॥

नीलनलिनाभमपिनाथि तवलोच
नं धारयति कोकनदरूपम् कुसुम
शरबाणभावेन यदि रंजयसि कृष्ण
मिदमेतदनुरूपं ॥४॥

नीलेतिहे तन्विकृष्णांगिनीलनलिनस्यनीलोत्पलस्येवा
भाकांतिर्यस्यतत्तवलोचनं कोकनदरूपं रक्तोत्पलस्वरूपतांधारयति
धत्तेरोषारुणत्वात् यदिइदं चक्षुः कृष्णांश्यामंकुसुमशरः कामस्त
स्यबाणः पुष्पाणितेभ्योभाव उत्पत्तिर्यस्य मधुनस्तेन रंजयतिरक्तं
करोषि तदारागतद्रक्तं रूपं अनरूपं योग्यंभवति यदिमधुपानंकरो
षितदानेत्रस्यरक्तत्वमुचितं नरोषादिसिभावः ॥४॥

स्फुरतकुचकुंभयोरुपरिमणिमंज
रीरंजयतुतव हृदयदेशं रसतुरसना
पितवघनजघनमंडले घोषयतुम
न्मथादिनेशम् ॥५॥

किंचिप्रसन्नांवीक्ष्याह स्फुरत्विति हे राधेमणिमंजरीहार

लतान्त्वा त्कुचकुंभयोः कुंचकलशायोरुपरिशोस्फुरतु शोभतां सा स्खलंतांतव हृदयदेशंवक्षः प्रदेशं रंजयतु स्वरशिमभिः शोभयतु नवघनजघनमंडलेनिविडकटिपुरोभागदेशे रशनापि कांच्यपि रसतु शब्दं करोतु साकांचीमन्मथदिनेशं कामाज्ञां प्रोषयतु शब्दायतां वचनचतुर्येणस्फुरति मणिमंजुरी वसतु रसनादिइत्यादिनाविपरीतरतं याचते ॥ ५॥

स्थलकमलगंजनं मम हृदयरंजनं
जनितरतिरंगपरभागम् भणमसृ
णवाणि करवाणि चरणद्वयं सरस
लसदलक्तकरागम् ॥ ६॥

हे मसृणवाणि स्निग्धवचने भण आज्ञापय अहं तव चरणद्वयं सरसांद्रः सहरसेन शृंगारेण वर्तते इतिवासरसं यथा स्यादेवं लसन् शोभमानः अलक्तकरागो यावकरागोयत्र स्तां दृशं करवाणि कुर्यां प्रार्थ्यनयालोहृ कथंभूतं चरणद्वंपं स्थलं कमलस्य गंजनं तिरस्कारकं पादृशमित्यर्थः पुनः कीदृशं मम हृदयरंजनं अनुरागकारकं पुनः कीदृशं जनित उत्पादितो रतिरंगे सुरतकौशले संभोगणागस्यदा परभागः परस्परशोभायेन मयालक्तकेनचेदिदं रंज्यते तदेहमपि क्रौंचबंधादौ मम हृदये लग्नेलग्नां मत्परां शोभां परस्परां द्रंक्ष्यतीति भावः ॥ ६॥

स्मरगरलखंडनं मम शिरसि मंडनं
देहि पदपल्लवमुदारं ज्वलति मयि
दारुणो मदनकदनानलो हरतु त
दुपाहितविकारम् ॥ ७॥

स्मरेतित्वं उदारं मनोहरं पदे पल्लवं मम शिरसि मंडनं अलंकारमिव देहि अर्प्यय कीदृशं पदपल्लवं स्मरगरलस्या कामविषस्य खंडनं नाशकं कामपीडानिवर्तकमित्यर्थः मयि दारुणः क्रूरकर्मा मदनकदनानलः कामपरितापवन्हिः ज्वलति दीप्यते पदपल्लवंक

र्तृ तदुपहितविकारं मदनकृतोपतापं हरतु शिरःपीडानिवर्तते नशरीरपीडानिवृत्तिरिति शिरसि दानं अथवा पल्लवा चरणादितच्छिरसः सुयतायोनभवतीति ॥७॥

इतिचटुलचाटुपटुचारुमुरवैरि
णो राधिकामधिवचनजातजयति
जयदेवकविभारतीभूषितमानि
नीजनजनितशातनम् ।८। इतिश्री
गीतगोविंदे ऊनविंशतिमःप्रबंधः
॥१९॥

इतीति इत्यमुनाप्रकारेण मुरवैरिणः कृष्णस्य राधिकां अधिअनुराधिकां लक्ष्मीकृत्येप्रोक्तं वचनजातं वाक्यसमूहो जयति उत्कर्षेण वर्तते कीदृशं चटुलं चाटुलं चाटु प्रीतियुक्तं पटु चतुरं चारु सुकुमारं पुनः कीदृशं जयदेवकवेः भारत्यावाराया भूषितं मानिनीजनस्य जनितं शातं सुखं येन तत्ता दृशं जयति पद्मावतीरमणजयदेवकविभारतीभणितमतिशातमितिपाठांतरे पद्मावती जयदेवस्य पत्नी तस्या रमणो वल्लभो यो जयदेवस्तेन भारती संज्ञया कवित्वं वर्णितं पुनः कीदृशं अतिशातं अतिशयितसुखं यस्मात्ता दृशमिति व्याख्यातं मंदं तया सति पौनरुक्त्यापत्तेः प्रथमपाठस्तु समीचीन एव ॥८

श्लोकः परिहर कृतातंके शंकां त्व
याऽसततघनस्तनजघनया क्रांते
स्वांते पूरानवकाशिनि विशति वि
तनोरन्यो धन्यो न कोपि ममांतरं स्त
नभरपरिरंभाय विधीयताम्
॥१॥

इदानीमात्मानं निरपराधं ज्ञापयन् संभोगाय प्रोत्साहय

न्नाह परिहरेतिहे कृतांतं के विहित कोपेशघेत्वंशंकां त्यजत्वयाचे तेव्यासेसतिवितनोः कामादन्योः धन्य: जनःकोपिममांतरंअभ्यंल रनविशतिनप्रविसति कीदृश्या त्वया घने कठिने स्तनजघने यस्याः तया कीदृशे स्वांते अतएवपरानवकाशेनि अन्यस्यावकाशपून्ये हे मणयेनियतोममांतरंकामएवविसति अतस्तनभरपरिरंभारंभे स्तनातिप्रायालिंगयोर्योगे विधीयतां कर्त्तव्यतां विधेहि कुरु मामा लिंगेत्याशयः ॥१॥

श्लोकः मुग्धे विधेहि मयि निर्दयदं
तदंशदोर्वल्लिवंधनिविडस्तनपी
डनानि चंडित्वमेव मुदमंचय पंच-
बाणचंडालकांडदलनादसवः
प्रयांति ॥२॥

यद्येवंनमन्येऽधिनदामयप्यपराधा कूलंदंडमाचरेत्याह मुग्धे लिहेमुग्धेमूढे सुदतिवामयिनिर्दयदंतदंशाक्षयारक्षितदंतक्षतंविधेहि कुरुकिंचदोर्वल्लिवंधोभुजलतावंधस्तेननिविडं दृढंयथास्यात्तथा स्तनाभ्यांपीडनानिविधेहि हे चंडि कोपनप्रशीले त्वमेव ममसुदंप्रीतिंअं चयजनयनत्वस्यांममानुरागइत्यर्थः उद्दहेतियाठकरुनोचेत्पंचवा णःकामः सएवचंडालस्तस्यकांडदलनात्‌ हाण प्रसः तात्‌ असवःम मप्राणाः प्रयांतिगच्छंति अतोमयिप्रसीदेत्यर्थः ॥२॥

श्लोकः शशिमुखि तव भाति भंगुर
भ्रूर्युवजनमोहकरालकालसर्पी त
दुदितभयभंजनाय यूनां त्वदधरसी
धुसुधैव सिद्धमंत्रः ॥३॥

ननुकोपिनीत्वेवेत्यतआह शशीति हे शशिमुखि चंद्रवदने नवभंगुरभ्रुकुटिः कुटिलाभूर्भातिशोभाते कीदृशीयुवजनानांतरां

जनानां मोहाय कराला भीषणा कालसर्पीकृष्णाहिवधूः तस्याः भुव सकाशात् उदितं उत्पन्नं यद्भयं तस्य भंजनाय नाशाय यूनां तरुणानां तवाधरसीधुमधुवंनदेवसुधापानसाम्यं त्वामाधुर्यश्चिरसैवसिद्धमंत्र साधितमंत्रः प्रियापहरणार्थं अधरपानं दत्वा तव कोपसर्पदष्टस्य ममजीवनं संपादयेतिभावः ॥३॥

श्लोकः व्यथयति वृथा मौनं तन्वि
प्रपंचय पंचमं तरुणि मधुरालापै
स्तापं विनोदय दृष्टिभिः सुमुखि वि
मुखीभावं तावद्विमुंच न मुंच मां स्व
यमतिशयस्निग्धो मुग्धो प्रियोऽह
मुपस्थितः ॥४॥

व्यथयतीति हे तन्वि सुंदरि तव वृथा मौनं मां व्यथयति तस्मात् हे तरुणि मधुरालापैः कोमलवचनैः पंचमरागं प्रपंचय प्रकटय दृष्टिभिः अवलोकनैः तापं मानसंतापं विनोदय अपसारय हे सुमुखि सुवदने विमुखीभावं दृष्टदृष्टित्वं विमुंच त्यज हे मुग्ध ज्ञानशून्ये अहं प्रियः स्वयं आकरणं विनैव उपस्थितः आगतः अतएव मे वचनं न वच यनोल्लंघस्व की दृशः प्रियः अतिशयस्निग्धः महावत्सलः स्वयमागतः हां तुं नो चितइतिभावः ॥४॥

श्लोक बंधूकद्युति बांधवोयम धु
रः स्निग्धो मधूकच्छविर्गंडश्चंडि
चकास्ति नीलनलिनश्रीमोचनं लो
चनं नासाभ्येति तिलप्रसूनपदवीं
कुंदाभदंति प्रिये प्रायस्त्वन्मुखसे
वया विजयते विश्वं सपुष्पायुधः ॥५॥
अधुनामानायनोदनाय तादंग स्तुतिं करोति लघु कोति

हे चंडि कोपनशीले तवायमधरः वंधूकपुष्पस्य द्युतिः कांतिस्तस्या
वांधवोमित्रशद्रुश्यकांत्तिशोभते तथास्निग्धास्निक्कणः गंडकपो
लस्यकांत्तिकी दृशः मधूकपुष्पवच्छविर्दीप्तिर्यस्यसः तथात्तवलो
चनंनेत्रंनीलनलिनश्रियंनीलोत्पलस्यकांतिंमोचयति तवनासान
सिकातिलप्रसूनस्यातिलपुष्पस्यपदवींमार्गसादृश्यमित्यर्थः अभ्ये
तिप्राप्नोतिहेकुंदाभदांतेकुंदपुष्पस्येवाभायेषांताहृशादंतायस्यास्तां
दृशिहेप्रियेवल्लभेप्रायइतितर्केयामिप्रसिद्धः पुष्पायुधःपुष्पमेवा
युधशस्त्रयस्यसः कामस्त्वन्मुखसेवयाविश्वंजगद्विजय्यतेवशी
करोतीत्यर्थः यानिकामस्यपुष्पायुधानितानिवंधूकनीलोत्पल
तिलकुंदपुष्पादीनित्वन्मुखेवर्तंतइतिसेवाकारवंधूकइति
दुपहरियामधूकइतिमहुआंइतिकान्यकुंजभाषायां ॥५॥

श्लोक दृशौ तव मदालसे वदनमिंदु
मत्यान्वितं गतिर्जनमनोरमा विधुत
रंभमूरुद्वयं रतिस्तव कलावती रुचि
रचित्रलेखे भ्रुवावहो विबुधयौवतं व
हसि तन्वि पृथ्वीगता ॥ ६ ॥

दृशाविति अहोइत्याश्चर्येहेतान्विसुंदरि त्वंपृथ्वीगताभूम्यां
स्थितापिविबुधयौवतंदेवयुवतीनांसमूहं वसकेनप्रकारेणेत्यत आ
हतवदृशौनयनेमदेनालसेमंथरे अवलोकनायमंदायतः तववदन
मुखंइंदुमत्याचंद्रवत्याआन्वितंयुक्तात्वंमुखदर्शनेनशशिभ्रमात्
दृष्टुर्भवतीत्यर्थः तवगतिर्गमनंजनमनोरमा तवोरुद्वयंजंघायुग्म
विधुतास्वशोभयातिरस्कृतारंभाकदलीयेन तवरतिः सुरतक्रीडाक
लावती कामकलाकौशलयुक्ता तवभ्रुवौरुचिराचित्राणिलेखा
ययोस्ते यथा चित्रेषुयामालेखाविलिखिताविव तथेति तवत्वया
द योजनयामदालसा, इंदुमती मनोरमारंभा कलावती चित्र

नेरवा संज्ञकः अप्सरसः मतिपादिताः पृथ्वीगतेत्यापि च एकस्या
अपि त्वाधि सर्वा सामप्सरसांगुणाः वर्ततइत्याश्चर्यं प्रेयो नामा लं
कारः पृथ्वीकं चेदं छंदः ॥ ६ ॥

श्लोकः प्रीतिवस्तनुतांहरिः कुव
लया पीडेन सार्धरणे राधापीन प
योधरस्मरणकृतकुंभेदसंभेदवान
यत्र विस्विद्यति मीलति क्षणमपि क्ष्वि
प्रंतदालोकना त्कंसो मोहे नाजितौजि
तंजितमभूद्यालोल कोलाहलः ॥

॥ ७ ॥ इतिश्रीकविराज श्रीजय दे
व कृते गीत गोविंदे महाकाव्ये मानि
नी वर्णने चतुर चतुरभुजानाम द-
शमः सर्गः ॥ १० ॥

कविः सर्गांते आशीर्वचमयुंक्ते प्रीतिमिति हरिः कृष्णो वः
युष्माकं गायतां शृखतां प्रीतिमानंदं तनुतां विस्तारयतु कीदृ-
शः रणे संग्रामे कुवलया पीडेन कंसहस्तिनासा ईसहकुंभस्थले
हस्तेनसंभेदवान् संवद्धः अतस्तत्र कुंभे राधापीनपयोधरस्मरण
कृत राधिकाया मांसलस्तन स्मृतियुक्तः हस्तिदर्शनेनपीनकुच
स्मरणंयुज्यत एवतदुक्तं सदृशादृष्टि चिंताद्याः स्मृतिजीवस्यवो
धकाः यत्रेवाहनेविस्विद्यतिस्वेदंगले सति अथचमीलति मूर्छेसति
जितंजितंजितकंससं वधो वालोलश्चंचलः कोलाहलः अभूत
जातः कंसोवालेनजितः इति सर्वैर्जनैः कलकलशब्दः कृत
इत्यर्थः वचनकौशलेनमानिमिमान दानात् चतुरः चतुर्भुजः कृ
ष्णोयत्र ॥ ७ ॥

अथ एकादशः सर्गः प्रारभ्यते

श्लोकः रुचिरमनुनयेनप्रीणयित्वा मृगाक्षीं गतवति कृतवेषे केशवे कुंजशय्यां रचितरुचिरभूषां दृष्टिमोषे प्रदोषे स्फुरति निरवसादां कापि राधां जगाद ॥१॥

अथुनाराधांमानिनत्सखी ब्रूते रुचिरमिति कापि सखी प्रदोषे रजनीमुखे स्फुरति दीप्यमाने सति प्राप्ते तुल्यार्थः राधां जगाद वक्ष्यमाणमिति योयः कस्मिन्सति केशवे कृष्णे अनुनयेनप्रीति वचनेन सुचिरं बहुकालं मृगाक्षींराधांप्रीणयित्वा संतोषयित्वा कुंजशय्यां त्वतापरहृष्यान नेगत वातेसति कीदृशोकेशवे कृतवेषे कृत शृंगारालंकारो राधायाइति कीदृशीं राधांरचिता कृतारुचिरा मनोहरा भूषा लंकारोयया कृष्णास्येति अन्योन्या लंकारकरणे नान्येन्य रागः सूचिता कीदृशो प्रदोये अंधकाराधिक्येन दृष्टीं मुष्णातीति दृष्टिन चोर के पुनः कीदृशीं राधां निरवासदां निर्गतः मान सभंगरूपो ऽवसादः उपतापोयस्यास्तां ॥ १॥

अथ विंशः प्रबंधो वसंत रागेण रूपक ताले गीयते ॥२०॥

विरचितचाटुवचनरचनं चरणरचितप्रणिपातं संप्रतिमंजुलवंजुलसीमनि केलिशयनमनुयातम् ।१॥ मुग्धेमधुमथनमनुगतमनुसरराधिके ॥ ध्रु०॥

वसंतराग ॥ उक्तार्थंगीते नाह विरचितेतिहेराधिके मुग्धेम्रते अनुगतं भक्तं कलं मधुमथनं कृष्णं अनुसर अनुगच्छ विरचिता उक्ता उक्ता चाटु मिथ्यावचनरचना येन तं पुनः कीदृशं चर

सोया देशघितः कृतः प्रणिपातः प्रणामोयेनतंतन्मानभंगायपुनः की कृष्णं संप्रतिइदानींमंजुलोमनोहरोऽयंलोकोवेतसलोवातस्यसीम नियर्षते तटेकेलिप्रायनंसुरतार्थप्राप्यां अनुयान मासमित्यर्थः अतस्त्वया शीघ्रं गंतव्य मिति ॥१॥

घनजघनस्तनभारभरेदरमंथरचर णविहारं मुखरितमणिमंजीरमुपै हिमरालविकारम् ॥२॥

तां प्रोत्साहयतीत्वरयतिघनेति घनयोर्मांसलयोर्जघनस्तनयोर्भारस्यभरोभाराधिक्यंयस्यास्तत्संबोधनंदरमंथरईष नमंदं यथा स्यात्तथाचरणविहारःपादक्रमोपस्यां क्रियायांमुखरितः शब्दित मणिमंजीरोमणिसहितमंजीरोयस्यांक्रियायांतंकृष्णमुपैहि मरालानांराजहंसानांविकारंविलासंविधेहिकुरु ॥२॥

शृणुरमणीयतरंतरुणीजनमोहन मधुरिपुरावं कुसुमशरासनशासन वंदिनिपिकनिकरेभजभावं ॥३॥

अन्यमप्युद्दीपनविभावंवर्णयति शृण्वेतित्वंरमणीयतरं अतिमनोहरं श्राव्यं तरुणीजनानां मोहनं मधुरिपोः कृष्णस्य एवंवंशशब्दं शृणु वा कर्णाय मधुपविरावमितिपाठेभ्रमरशब्द किंचपिकनिकरेकोकिलसमूहेकुसुमचापशासनंधनुर्यस्यतादृशः कामस्तदाज्ञातपावंदिदिस्तावके सतिभावं कृष्णानुरागं भज आश्रय हेमानिन्यः मानंत्यक्त्वा यूयंभजनं कुरुतेति कोकिलाः बोधयंतीत्यर्थः ॥३॥

अनिलतरलकिसलयनिकरेण करेणलतानिकुरंबं प्रेरणमिषकर

भीरु करोनिगतिं प्रतिमुंच विलंब
म ॥५॥

अनिलेति हे करभोरु कनिष्ठांगुलीमणिबंधपर्यंतं करस्य बहिर्भा
गस्तद्वद्रूरू जंघा द्वयं यस्यास्तत्संबोधनं गतिंगमनं प्रति विलंबं मुंच शी
घ्रं गच्छेत्यर्थः यतः लतानिकुरंबं लतासमूहं अनिलेन तरलश्चंच
लोयः किसलयनिकरः पल्लवसमूहस्तद्रूपेण करेण हस्तेन तव प्रेर
णामिव गमनमिव करोति अचेतनालतापि त्वां प्रेरयति किंपुनरहं ॥५॥

स्फुरितमनंगतरंगवशादिव सूचित
हरिपरिरंभं पृच्छ मनोहरहारविम
लजलधारममुं कुचकुंभम् ॥५॥

अपि च स्फुरितमिति हे राधे त्वं असुं च कुंभं स्तनद्वयं पृच्छ सम्य
ग्गतिवर्तुलत्वात्काठिन्यत्वाच्च कुंभसाम्यं कीदृशं कुचकुंभं अनंगस्य
कामस्य ये तरंगा विकारास्तद्वशात् इव स्फुरितं सकंपं अतएव सूचि
तः हरेः परिरंभः आलिंगनं येन अन्योपि कलशो नद्यां तरंगैः प्रेर्य
माणः संकंपो भवति इव शब्दो चेत्प्रोक्षकाद्येतकः पुनः कीदृ
शं मनोहरो यो हारः स एव विमला निर्मला जलधारा यत्र ॥५॥

अधिगतमखिलसखीभिरिदं तव
वपुरपि रतिरणसज्जं चंडि रसित
रसनारवडिंडिममभिसर सरसम
लज्जम् ॥६॥

अधिगतमिति हे चंडि अत्यंतकोपने इत्याक्षेपे संबोधनं अ
खिलसखीभिरधिगतं वेदं वपुः शरीरं रतिरणे सुरतसंग्रामे सज्जं संनद्धं
अधिगतं ज्ञानं तव मसि अभिमानो नास्तीत्यर्थः एवं सति रसिताश्च
दितारवा नाक्षुद्रघंटिका येन आरवडिंडिमो वद्य विशेषो यस्य
क्रियायां सा रससमोत्कंठया यथा स्यात्तथा अलज्जं लज्जारहितं

यथास्यात्तथाऽभिसर कृष्णमित्यध्याहारः॥६॥

स्मरशरसुभगनखेन सखीमवलंब्य करेण सलीलं चलवलयक्कणितैरव बोधय हरिमपि निजगतिशीलं ॥

॥७॥

स्मरेति हे राधे त्वं करेण हस्तेन सखीं अवलंब्य सलीलं सविलासं यथा स्यात्तथा चल गच्छ कीदृशेन करेण स्मरशरवत्कामबाण एव सुभगानि सुंदराणि नखानि यस्मिन् रणे शस्त्राणीथवं लिरानिखेषु त्वन्नखान्येव स्मरस्य शस्त्राणीति भावः गत्वा चवलयक्कणितैः कंकणशब्दैः हरिं कृष्णं अवबोधय अहमागतेति ज्ञापयेत्यर्थः अपि किं यासमुच्चये कथंभूतं हरिं निजे आत्मनि गतिर्यस्य स निजगतिः कामस्तस्मिन् शीलं ममाधिष्ठितं कामंयस्य कामपरवशमित्यर्थः

श्रीजयदेवभणितमधरीकृतहारमुदासितवामं हरिविनिहितमनसामधितिष्ठतु कंठतटीमविरामम् ८॥

इति श्रीगीतगोविंदे विंशतितमः प्रबंधः॥

श्रीजयदेवेति श्रीजयदेवभणितं गीतं हरौ कृष्णे विनिहितमारोपितं मनो यैस्तेषां भक्तानां कंठतटीं अविरामं सर्वदा अधितिष्ठतु कंठदेशे वसत्वित्यर्थः अधिशीङ् स्थासां कर्म कीदृशं भणितं अधरीकृतः स्वगुणैर्हीनः कृतः मुक्ताहारो येन पुनः कीदृशं उदासिता स्वगुणैस्तिरस्कृता वामा सुंदरी येन यद्यपि हारस्सरमणीवकंठदेशस्थस्तस्य या शोभा तत्प्रदत्वं संभाव्यते तथापि तत्पोराणिगणैव शोभाप्रदत्वं न तु पुरुषाणां तत्रापि तारुण्यावस्थैव न तु सर्वदा जयदेवभणितं तु कृष्णभक्तानां हारापेक्षया बाधिकमित्यर्थः ॥८॥

श्लोकः मासंदृक्ष्यतिवक्ष्यति प्रिय
कथांमन्यंगमालिंगनैः प्रीतिं या-
स्यतिरंस्यते सखि समागत्येतिचि
ताकुलः सत्वापश्यतिवेपतेपुल
कयत्यानंदतिस्विद्यतिप्रत्युद्गच्छ
तिस्थिरतमः पुंजेनिकुंजेप्रियः॥१॥

इदानींसखीकृष्णस्यस्नेहातिशयमाहसामामितिहे राधेस प्रियः कृष्णः स्थिरे निश्चलेतमः पुंजे अंधकार समूहे अन्यत्रतस्मिन् निकुंजेलतागृहेत्वांपश्यतिध्यानेन दृष्ट्वापिकिंप्रियंपरुषमधुरं वदी ष्यतीतिभयात् वेपतेकंपतेपुलकयति अंगानीत्यर्थः ध्यानेनैवत् दालिंगनं परिकल्प्यसरोमांचोभवतीत्यर्थः ध्यानेनत्वत्सुरतकेलि परिकल्प्यस्विद्यतियथात्केलिंकृत्वा उत्थायगंतुंप्रवृत्तायां त्वयि प्रत्युद्गच्छतिप्रत्युत्थानं करोतितनः ध्यानविच्छेदेत्वा मदृष्ट्वामू र्च्छति कीदृशः प्रियः चिंताकुलः चिंतायुक्तः इतीतिकिं हे सखि सा राधामांदृक्ष्यति अनुकूलतयाईक्ष्यते दृष्ट्वाच प्रिय कथांम नोहरां कथां वक्ष्यति वदिष्यति उक्त्वा प्रत्यंगंप्रति अवयवंप्रति आलिंगनैः प्रीतिं संतोषं यास्यतिप्राप्स्यति समागम्यमिलित्वारं स्यतेमया सह क्रीडिष्यतेइति प्रश्नेसमागम्येतिपूर्वोद्धं सर्वत्र योज्यं दीपकालंकारः शार्दूलविक्रीडितंवृत्तम् ॥१॥

श्लोकः अक्ष्णोर्निक्षिपदंजनं श्रव
णयोस्तापिच्छगुच्छावलिं मूर्ध्नि-
श्यामसरोजदामकुचयोः कस्तूरि
कापत्रकम् धूर्तानामभिसारसत्वरहृ
दां विष्वक् निकुंजे सखि ध्वांतनी
लानेचोल चारु सुदृशांप्रत्यंगमालि

गति ॥२॥

गमन कालयोग्यं अंधकारं वर्णयति अक्ष्णोरिति हे स
खि राधे ध्वांतं अंधकारः सुदृशां नायिकानां प्रत्यंगं प्रत्यवयवं आलि
गति आश्लिष्यति किं कुर्वन् अक्ष्णो नेत्रयोरंजनं कज्जलं निक्षि
पन् विन्यस्यत् श्रवणयोः कर्णयोः तापिच्छ गुच्छावलिं तमाल
पुष्पस्तवक कर्णपूरपंक्तिं निक्षिपन् कुचयोः स्तनयोः कस्तूरि
कापत्रकं मृगमदपत्रावलिं निक्षिपन् मस्तके श्यामसरोजदाम
नील कमल मालां निक्षिपन् कीदृशीनां सुदृशां धूर्तानां परिवंच
कानां पुनः कीदृशीनां किंच क सर्वत्र निकुंजे लतागृहे अभिसा
रसत्वरं गमनाय साहसं हृत्या सोता स्तासां कीदृशं ध्वांतं नीलनि
चोलवत् भूषा वक्ष्यवत् चारु प्रादृशा मित्यर्थः नीलवस्त्र स्थाने
ध्वांतं जालमित्यर्थः अतो भूषणादि निर्माणेनापि कालातिक्रमो
नुयुक्तः इतिभावः ॥२॥

श्लोकः काश्मीर गौरवपुषाम
भिसारिकाणा माबद्धरेखमभितो
मणिमंजरीभिः एतत्तमाल दलनी
लतमं तमिस्रं तत्प्रेमहेमनिकषो
पलतां तनोति ॥३॥

अंधकारमेव वर्णयति काश्मीरेति हे राधे एतत्तमिस्रं
अंधकारः तत्प्रेमतासामभिसारिकाणां यत्प्रेम प्रीति स्तदेव हेमसु
वर्णं तस्य निकषोपलतां घर्षणपाषाणतां तनोति विस्तारयति
कीदृशं तमिस्रं काश्मीरं कुंकुमं तद्वद्गौरे पीनवपुर्यासां तासा-
मभिसारिकाणां स्त्रीणां मणीमंजरीभिः मणिकिरणैः अभितः
सर्वतः आबद्धा कृता रेखा यस्मिन् तमालदलं नूतनपत्रं तद्वन्नीलत
मअतीव श्यामं कामार्थिनी तु याया तु संकेतं साभितारिकेत्य॰

मरः इत्यभिसारिकालक्षणं अभिसारिकाणां प्रेम परीक्षा समय स्त्वयमेव यद्द धतमासिगमनमिति ॥ ३ ॥

श्लोकः ॥ हारावली तरल कांचन कांचिदाम केयूर कंकणमाणद्युतिदीपि तस्य द्वारे निकुंज निलयस्य हरिं निरीक्ष्य व्रीडावतीं मथ सखीनि जगाद राधा ॥ ४ ॥

हारावलीति अथानंतरं सखी राधां निजगाद पुनरासेउवाच कथंभूतां राधां निकुंज निलयस्या लतागृह मेव निलयं निभृतगृहं तस्य द्वारे हरिं कृष्णं निरीक्ष्य दृष्वा व्रीडावतीं लज्जां आस्मिन्मया कति निष्ठुराणि वचांसि उक्तानि संप्रति तत्समक्षं कथं यामीति लज्जा की दृशी स्य निलयस्य मुक्ताहार मध्य द्युमणेः द्युत्या कांचण कांचीदाम्नः सुवर्ण कांचीरसनायाः द्युत्या केयूरस्या बाहुभूषणस्या वद्युत्या एते सुखचिता येमणय स्तेषां द्युत्या दीपितस्य प्रकाशित तस्य एतेन ध्वांतापे दर्शन योग्यता उक्ता ॥ ४ ॥

अथ एकविंशतितमः प्रबंधो वराडि रागेण आदिबतालेगीयते

मंजुतर कुंज तल केलि सदनम् इह विलस रतिरभस हसितवदने ॥ १ ॥ प्रविश राधे माधव समीपम् इह

नदेवगीते नाह वराडि रागे मंजुतरेति हे राधे रतिरभसेन सुरतोत्साहेन हसितं हास्य युक्तं वदनं मुखं यस्यास्त स्त्संबोधने इह अस्मिन् मंजुतरं मनोहरं निकुंजाभ्यंतर देशात्तदेव केलि सदनं क्रीडागृहं तास्मिन माधव समीपं प्रविश गच्छ पश्चाद्विलस क्रीडां कुरु ॥ १ ॥

नवभवदशोक दल शयनसारे ॥ प्र० ॥

कुचकलशतरलहारे ॥२॥

अपिचनवेति हे कुचकलशयोश्चंचलहारोमुक्ताहारोय स्यास्तत्संबोधनं हे राधे इह क्रीडा गृहे माधवसमीपं प्रविश्यविलस च कीदृशे इह नवानिनूतनानिभवंतियानि अशोकदलानिपर्णा नि तत्कृताशय्यातदेवसारोमहाधनंयस्मिन् ॥२॥

कुसुमचयरचितशुचिवासगेहे प्र०

कुसुमसुकुमारदेहे ॥३॥

कुसुमेतिहे कुसुमवत्सुकुमोरोदेहोयस्यास्तत्संबोधनं कीदृशेइह कुसुमचयेनपुष्पसमूहेनरचितं कृतंशुचि अनुपह तंनापि केनांतरेणानुपभुक्तंयद्वासगृहं तत्र विलस ॥३॥

मृदुचलमलयपवनसुरभिशीते।

प्र०॥ रसवलितललितगीते॥४॥

मृदुचलेतिहे रसवलितं कृत्वाललितं मनोहरं गीतंयया तत्संबुद्धिः हे राधे इह कोकिलसदने विलसकीदृशे इह चलश्च चलोयोमलयपवनस्तेनसंपर्केवासन् सुरभिएवंभूतसत्शी तलेतस्मिन् ॥४॥

विततबहुवल्लिनवपल्लवघने।

प्र०॥चिरमिलितपीनजघने ५॥

विततेतिहे चिरमिलिते बहुकालेअन्योन्यसंवत्योपीने मांसलेजघनेयस्यास्तत्संबुद्धिः हे राधेइहहि विलसकीदृशेइहवि तताइतस्ततोविपुलाणिबहुवल्लयः वल्यस्तासानं पल्लवारतोर्घ नेनिविडेशयनेइत्यध्याहारः निविडशयन इत्यर्थः ॥५॥

मधुमुदितमधुपकुलकलितरावे

॥प्र०॥मदनरभसरसभावे॥६॥

मध्वीतिहे मदनरभसः कामरभसः शृंगारभावो ऽभिप्रा०

योयस्यास्त त्वं बुद्धिः कीदृशे इह मधुनि पुष्परसे मिलितानितत्या नार्थी मित्यर्थीः यानिमधुपकुलानि भ्रमरसमूहास्तैः कलितः कृतोरावः शब्दोयस्मिन् ॥६॥

मधुतरलपिकनिकरनिनदमुखरे।
म०॥ दशनरुचिरुचिरशिखरे।७॥

मधुतरलेतिहे दशनरुचिरेनवदंतदीसिरेवरुचिरंशिखरंमाणिक्यविशेषोयस्यास्त त्वं बुद्धिः कीदृशेइह मधुर वसंतेन तरलश्चंचलः पिकनिकरो कोकिल समूहस्तस्य निनदशब्देनं मुखरे शब्दायिते पक्कदाडिम वीजाभंमाणिक्यंशिखरंविदुः इतिशाश्वतः॥७॥

विहितपद्मावतीसुखसमाजेकुरुमुरारेमंगलशतानिभणतिजयदेवकविराजराजे॥८॥ इतिश्रीगीतगोविंदे एकविंशतिमः प्रबंधः २१

विहितेतिहे मुरारे कृष्ण त्वं जयदेवकविराजे मंगलशतानि कुरु कीदृशे जयदेवकविराजे विहितः कृतः पद्मावत्याः स्वस्त्रिय सुखसभाजः शुभसमूहो यस्मिन् एतेन स्वनायिकायामेव प्रेमातिशयो दर्शितः नत्वन्यस्यां पुनः कीदृशे भणतिस्तत्र गुणान्वदातेक्कचिन्मवित्प्रराधे माधवसमीपभणितेतिपाठः॥८॥

श्लोकः त्वांचित्तेनचिरंवहन्नयमतिश्रांतो भृशंतापितः कंदर्पेण चपातुमिच्छति सुधासंवाधबिंबाधरं अस्यांकंतदलंकुरुक्षणमिह भ्रूक्षेपलक्ष्मीलवक्रीतेदासइवोपसेवितपदांभोजेकुतः संभ्रमः॥१॥

त्वामितिहे राधे अयं कृष्णास्तवसुधया सूतेन संबाधंगहनं विंबाधरं यातुमिच्छति कीदृशः कृष्णः पतः चित्तेनमनसा त्वांचि रंवहन् अतिश्रांतः यतः कंदर्पणाधर्षणं वापिनः अन्योऽपिभास्माद् हीसूर्येनापितस्वजलानियातुं इच्छतिनद्यादित्यर्थः ततस्मा स्य कृष्णास्यांकं क्रोडं क्षणं मुहूर्तमात्रं अलंकुरु भूषणं तत्स मीपंगतु विभेमीत्यन आह इह कृष्णे संभ्रमः भयंकुतः कीदृ शो इहदासइवसेव कद्रवस्थित पुनः कीदृशो भुक्षेपः कटाक्ष क्षेऽइह सरावलक्ष्मीः संपत्तद्व्यंतेनन कोनेनूतनः कीतोदासो तिभि तोभवतीत्तिभावः अतएव उपसेवितं पदांभोजंचरणक मलंयेन॥ १॥

श्लोकः सासमाध्वससानंदंगोविं
दे लोललोचना सिंजाना मंजुमं
जीरं माविवेशनिवेशनम् ॥२॥

सेतिसाराधानिवेशनं लत्तागृहं प्रविवेश सखी वचनात् कीदृशी राधा ससाध्वसंविदग्धाः कृष्णः कथंमयारंजनीयइति सानंदसहर्षंचइतिकेनेकत्वात् गोविंदे कृष्णे लोलेलोचनेय स्याः सत्वात्वास् पुनः कीदृशी मनोहरशब्दयुक्तंमंजीरंनूपुरं सिंजानागमनवशात् शब्दं कुर्वती क्वचित्सासाध्वससानंदगो विंदेइतिपाठः तदाससाध्वसः पूर्वापराधात् सानंदः राधायाः आगमनात् एवंनायकयोः समागमेरसोत्पत्तिरुक्ता ॥२॥

अथ द्वाविंशतिमः प्रबंधः वराडि
रागेण रूपकतालगीयते

राधावदनविलोकनविकासित
विविधविकारविभंगं॥ जलनि
धिमिवविधुमंडलदर्शनतरलित

तुंगतरंगं ॥ १ ॥ हरिमेकरसं चिरमभि
लषितविलासं सादद्र्शगुरुहर्ष
वशंवदनमनंगनिवासं ॥ ध्रु० ॥

लीलारहस्यवेशनिरूप्येदानीं दर्शनमहोत्सवे नरस्त चिक्री
यां गोसेनाहवाडिराग: रूपकताल: साराधा एवंभूतं हरिंददर्श सखप
द्या सर्वाणि हरि विशेषणानि कीदृशं हरिं राधावदनविलोकनेनवि
कासित: प्रकासित: विविध: नानाप्रकार: विभाग: विभंगो कटा
क्षादिर चानायेनतं पुन: कीदृशं जलनिधिं समुद्रमिवस्थितं
कीदृशं ॥ जलनिधिं विधुमंडलदर्शनेन चंद्रमंडलालोकेन
तरलिता श्चंचली कृता: तरंगा: कल्लोला यस्य वं पुन: कीदृशंचि
एकरसं कस्याराधायामेवरस: प्रीतिर्यस्यतं पुन: कीदृशं चिरं
रंबहुकालं अभिलषित: प्रार्थित: विलास: केलिर्येनतं पुन: की
दृशं गुरुहर्षस्यातिशयस्यहर्षस्य वशंवदं अधीनंवदनं मुखंय
स्य सानंदमुखमित्यर्थ: पुन: कीदृशं अनंगस्यकामस्यनिवासं
स्थानभूतं कंदर्पकोटिलावण्यमित्यर्थ: अत्रागाधशृंगाररसा
श्रयत्वेन कृष्णस्य जलनिधिसाम्यं राधामुखस्याल्हादकारि
त्वादिनाचंद्रसाम्यं वोध्यं उपमालंकारश्च ॥ १ ॥

हारममलतरतारमुरसि दधतं परि
लंबितदूरं ॥ स्फुटतरफेनकदंबक
रंबितमिव यमुनाजलपूरम् ॥ २ ॥

हारमितिपुन: कीदृशं हारं मुक्ताहारं दधतं धारयंतं उरसि
हृदये कीदृशं हारं अमलतरतारं अत्यंतविशुद्धं दहह्लारं पुन:
कीदृशं स्फुटतरो यो फेनदंवस्तेन करंवितं मिश्रितं यमुनाजल
पूरमिव श्रीकृष्णस्य श्यामत्वाद्यमुनाप्रवाहसाम्यं सारशुभ्रत्वा
त् नकाम्यं वोध्यम ॥ २ ॥

श्यामलमृदुलकलेवरमंडनमधि
गतगौरदुकूलं नीलनलिनमिवपीत
परागपटलभरवलयितमूलम्। ३।

श्यामलेति श्यामलं कृष्णं मृदुलं कोमलं कलेवरमंडनं शरीरालंकारोयस्यतं पुनः कीदृशं अधिगतं परिहितं गौरदुकूलं पीताम्बरंयेन कमिव नीलोत्पलमिवेत्यर्थः कीदृशं नीलनलिनं पीतपरागाणां कुंकुमरेणूनां पटलस्य समूहस्य भरः आतिशयस्तेन वलयितं वेष्टितं मूलं यस्य तत्तथा ॥ ३॥

तरलदृगंचलचलनमनोहरवदन
जनितरतिरागं स्फुटकमलोदरखे
लितखंजनयुगमिव शारदितडाग
॥ ४॥

तरलेति कीदृशं हरिं तरलश्चंचलोयोकटाक्षस्तस्य चलनेन मनोहरं सुंदरं यद्वदनं तेजजनितउत्पादितोरसोरागोऽभिलाषोऽर्थात् नारीणां येन नारीणां मतिकमकर मितिभावः क मिव शारदे शरत्काले तडागमिव कीदृशं तडागं स्फुटकमलस्य विकासितपद्मस्योदरमध्ये खेलितं क्रीडितं खंजनयोर्युगं यत्र तथा शरत्काले खंजनवर्णनं सुचितमेव ॥ ४॥

वदनकमलपरिशीलनमीलितमि
हिरसमकुंडलशोभं ॥ स्मितरुचि
रुचिरसमुल्लसिताधरपल्लवकृत
रतिलोभम् ॥ ५॥

वदनेति वदनकमलस्य परिशीलनाय मिलिते मिहिरसमे सूर्यतुल्ये ये कुंडलेताभ्यां शोभा यस्य तं तथा पुनः कीदृशं स्मितरुचिरोहासस्तशोभ सुभागः समुल्लसितदोष्णमानोया अपल्लव

स्तेनकृतो रतौ लोभो युवती नां रताभिलाषो येन तं तथा त्वत्यक्षे त्वयि रतिलोभूमित्यत्र गणकत्वान्समासः ॥५॥

प्राशुकिरणच्छुरितसुंदरजलधरसुंदर
कुसुमसुकेशं तिमिरोदितविधुमंड
लनिर्मलमलयजतिलकनिवेशम्
॥६॥

प्राशेकिरणेति कीदृशं हरिं शाशिकिरणेन चंद्रदीप्त्या छुरितं मंडितं सुंदरमभ्यंतरं यस्य जलधरस्य मेघस्य तद्वत्सुंदराः पुष्पसहिताः केशाः यस्य तं अत्र केशानां श्यामतया मेघसाम्यं तत्रस्थकुसुमानां च मेघातश्शारि चंद्रकिरणसाम्यं बोध्यं पुनः कीदृशं तिमिरे धकारे उदितं अस्ति तो यो विधुमंडल श्चंद्रबिंबस्तद्वन्निर्मलं मलयजतिलकं चंदनबिंदुस्तस्य निवेशं वस्थानं यत्र तं शृंगारिणां मागराणां तिलकं वर्तुलमेवेति तस्या चंद्रसाम्यं चंद्रोदये तिमिरस्या-संभवादभूतोपमेयं बोध्या ॥६॥

विपुलपुलकभरदंतुरितं रतिकेलि
कलाभिरधीरं मणिगणकिरणस
मूहसमुज्ज्वलभूषणसुभगशरीरम्
॥७॥

विपुलेति कीदृशं हरिं विपुलोधिकोयः पुलकभरो रोमांच्चाति शायस्तेन दंतुरितं निम्नोन्नतं व्याप्तमित्यर्थः पुनः कीदृशं रतिकेलिकलाभिः सुरतक्रीडा कथाभिरधीरं चंचलं पुनः कीदृशं मणिगणानां किरणसमूहेन समुज्ज्वलं दीप्यमानं यद्भूषणं तेन सुभगं सुंदरं शरीरं यस्य सं तथा ॥७॥

श्रीजयदेवभणितविभवद्विगुणी
कृतभूषणभारं ॥ मणमत हृदि ।-

*

विनिधाय हरिंभवजलसुकृतोद यसारं ॥ ८॥

श्रीजयदेवेति श्रीजयदेवस्य भणितविभावेनभावितमपंचेन द्विगुणी कृतस्यालंकारस्यभारोयस्य तं हरिं हे कृष्णभक्ता प्रणतनमस्कुरुत किं कृत्वा सुचिरं चिरकालं हृदि विनिधायस्थाप्य-कथंभूतं हरिं सुकृतस्ययो उदयस्तस्य सारं यद्वा सुकृतोद-य एवसारो धनं यस्मात्तं ॥ ८॥

श्लोकः॥ अतिक्रम्यापांगं श्रवणपथपर्यंतगमनप्रयासेनेवाक्ष्णोस्तरलतरतारंपतितयोः इदानीं राधायाः प्रियतमसमालोकसमयेपपातस्वेदांबुप्रसरइव हर्षाश्रुनिकरः ॥ १॥

एवंभूतस्य कृष्णस्यदर्शनाद्राधायास्तदानीं किं जातमिति हरिः राह अतिक्रमेति इदानीं प्रियतमसमालोकसमयेप्रवाहसदृशः राधायाः हर्षाश्रुनिकरः सात्विकभावेननेत्रांबुपूरः पपाततत्रोत्प्रेक्षते अपांगंनेत्रप्रांतंअतिक्रम्योल्लंघ्यश्रवणपथस्य कर्णमार्गस्यपर्यंत गमनं येन तेनयःप्रयासस्तेनेवा-क्ष्णोः स्वेदांबुप्रसरोभूत् कीदृशयोरक्ष्णोः तरलतारं चंचलाक्षकनीनिकं यथास्तां स्यात्तथापतितयोः अन्यस्यापिगमनेनश्रमो भवतितेन स्वपततितद्वत् ॥ १॥

श्लोक॥ भजंत्यास्तल्पांतं कृतकपटकंडूतिपिहितस्मितेयातेगेहाद्बहिरवहितालीपरिजने प्रियास्यं पश्यंत्याः स्मरपरवशाकूतसु

भंगं सलज्जायाल ज्जाप्यगम दिव
दूरं मृग दृशः ॥२॥

भजंत्या इति मृगदृशः मृगाक्ष्याः राधायाः लज्जापि दूरं व्य
गमदि वगतेव कीदृश्याः राधायाः अवहितः सावधानोय आलीप
रिजनः सखी सेवक वर्गस्तस्मिन् गेहाद्बहिर्यातेगतेसतितल्पां
तेशय्यापर्यंतं भजंत्याः प्राप्नुवत्याः कीदृशेपरिजनेकृताकपटेन
कर्णादि कंडूतिः कंडूयनंतेनपिहितंछादितंहास्ययेनः पुनः की
दृश्याः प्रियास्य कृष्णस्यमुखं पश्यंत्याः कीदृशंप्रियास्यंप्रयाणसर व
कामबाणाधीनं आकूतं सुरताभिप्रायस्तेनसुभगंमनोहरं कामवि
कारहावभावादिनमनोहर मित्यार्थः पुनः कीदृश्याः सलज्जायः
लज्जासहितायाः तस्याश्चेष्टं दृष्ट्वावचनां तरेण अष्टसखीवहिर्गम
नात्सखीनासाम्यं सर्वाः सख्यो न गता इति कथमत्रस्वातंत्र्यमि
ति लज्जापिगतेतिभावः ॥२

श्लोकः ॥ जय श्रीविन्यस्तैर्महित
इव मंदारकुसुमैः स्वयासिंदूरेणाद्वि
परणमुदामुद्रितइव भुजापीडक्री
डाहतकुवलयापीड करिणः प्र-
कीर्णासृग्बिंदुर्जयति भुजदंडोमु
रजितः ॥३॥

इति श्रीकविराज श्रीजयदेवकृते
गीतगोविंदे महाकाव्येसानंद गोवि
दोनामैकादशः सर्गः ॥

जयतिमुरजितः कृष्णास्यभुजादंडोदंडाकारबाहुर्जयतिस
र्वोत्कर्षेणावर्ततेभक्तानांरक्षणार्थमितिशेषः दंडशब्देन आजान
बाहुत्वं घोतितं कीदृशोभुजदंडः प्रकीर्णाः सर्वत्रलग्नाः असृग्बिं

द्वोरक्त बिंदवोयस्मिन् अतएवकुवलयापीड संग्रामसंतोषेण स्वयं
सिंदूरेण मुद्रित इव चित्रित इव बाहूपक्षे सिंदूरेण मुद्रितस्तर्हि म
दीयोबाहुरपि सिंदूर मुद्रितोभवतु पुनः कीदृशाद्दूष जयश्रियाजय
लक्ष्म्याविन्यस्तै विक्षिप्तैः मंदार कुसुमैः पारिजातपुष्पैर्महित इ
वपूजित इवजापितः पुरस्थो परिपुष्य दृष्टि रुचिताकीदृशास्यपुर
जितः भुजापीडस्य बाहु दंडस्य कोडयाहतः कुवलयापीडनामा
करो हस्तीयेन अपनेन सामर्थ्य लक्षणो नायक गुण उक्तः एवंभू
ते भुजदंडे गाढालिंगनादिना श्रीराधायाः निःशंक क्रीडनंसूचितमिति
भावः अत्रोन्नेमालंकारः सानंदोराधा समागमेन सौंदर्यातिशयपक्षः

## अथ द्वादशः सर्गः प्रारभ्यते

श्लोक ॥ गतवति सखीवृंदे मंदत्र
पाभरनिर्भर स्मरपरवशाकूतस्फी
तस्मित तस्नपिताधरां सरसमनसं
दृष्ट्वाराधांमुहुर्नवपल्लवप्रसव
शयने विक्षिप्ताक्षीमुवाचहरिः
प्रियाम् ॥१॥

गतवतीति अथहरिः कृष्णः प्रियांवल्लभांराधांसरसमन
संरसोनुरागस्तत्सहितंमनोयस्यास्तां दृष्ट्वा उवाच वक्ष्यमाणमभि
तिप्रायः कस्मिन् सखीवृंदे सखीसमूहे गतवतिसति कीदृशीं राधां
मंदोल्पोयो त्रपाभरोलज्जाभरस्तेन निर्भरोतिप्रायतोयः स्मरस्त
त्परवशस्तदायत्तो आकूतोभिप्रायस्तेन स्फीतं प्रवृद्धं यत् स्मित
मीषद्धसितंतेन स्नापितौ व्याप्तावधरौयस्यास्तां अथमद कृरइ
तिस्मराविष्टोयणां पुनः कीदृशींमुहुः पुनःपुनः नवपल्लवप्रसव
शयनेनवपल्लवपुष्पमयेशयने विक्षिप्ताक्षीं निहितनयना
प्राप्यालोकनेन सुरतेच्छा ध्वन्यते आस्मिन्सर्गेस्वाधीनभर्तृकानायि

का वर्ण्यते यस्याः रतिगुणकृष्टः पतिः पार्श्वं न मुंचति विचित्र विभ्रमासक्ता सा स्वाधीनभर्तृका ॥ १॥

अथ त्रयोविंशतिमः प्रबंधो विभासरागेण एकतालीतालेगीयते ॥

किसलयशयनतले कुरुकामिनि चरणनलिनविनिवेशं तव पदपल्लववैरपराभवमिदमनुभवतु सुवेशम् ॥ १॥ क्षणमधुना नारायणमनुगतमनुसर मां राधिके ॥ ध्रुवपदं ॥

किसलयेति विभासरागः तल्लक्षणं स्वच्छंद संमानितपुष्पचापः प्रियाधरस्वादुसुरवाति तसः पर्यंकमध्यास्य कृतोपवेशो भासो विपूर्वः किल हेमगौर इति हे राधे अधुना क्षणं अनुगतं आधीनं मां नारायणं अनुसर अनुगच्छ अनुसरण प्रकार माह हे कामिनि हे कामुके त्वं किसलयैः रचित शयने शय्यतले उपरिभागे चरणनलिनस्य विनिवेशं पादपद्मस्थापनं कुरु इदं किसलयशयनं नवपदपल्लवेन वैरि तस्मात्पराभवं तिरस्कारं अनुभवतु मा प्रीतु न वपदपल्लवस्य कांतिहरणात् शत्रुमस्तके हि चरणो दीयते कीदृशं इदं शुभवेशमपि पत्रचरनादिना लंकृतमपि ॥ १॥

करकमलेन करोमि चरणमहमागमितासि विदूरं क्षणमुपकुरु शयनोपरि मामिव नूपुरमनुगतिशूरं २

हे राधे अहं कमलेन ते चरणं करोमि संवाहयामि घोनतापत्रे कार्ये स्यात् यतस्त्वं विदूरं आगमितासि समायाता आनी

तासि दूरागतस्य चरणसंवाहनमुचितं त्वंधायनोपरि क्षणं नूपुरं उपकुरु कमिव अनुगतिशूरं तथानुसरणे धीरं मामिव यथा आलिंगना दिनामामुपकरोषि तथा नूपुरमपि शय्यातलमलं कुरु इति भावः

वदनसुधानिधिगलितममृतमिव
रचय वचनमनुकूलम्। विरहमि
वापनयामि पयोधररोधकमुरसि
दुकूलम् ॥३॥

वदनेति त्वं अनुकूलं वचनं वाक्यं अमृतमिव रचय वदकीदृशं वदनमेव सुधानिधिश्चंद्रस्तस्माद्गलितमुत्पन्नं अनंतरं उरसि वक्षसि वर्तमानं दुकूलं पट वस्त्रं विरहमिव अपनया मिस्फोटयामीत्यर्थः कीदृशं पयोधररोधकं स्तनावच्छादकं विरहपक्षे स्तनाश्लेषप्रतिबंधकम् ॥३॥

प्रियपरिरंभणरभसवलितमिव
पुलकितमत्यदुरवापम् मदुरसि कु
चकलशं विनिवेशय शोषय मन
सिजतापम् ॥४॥

कुटिलमवलोकयंतीमपि विह्वला सन्नाह प्रियेति हे राधे त्वं मदुरसि मम वक्षसि कुचकलशं विनिवेशय स्थापय स्तनकलशार्पणेन मनसिजतापं कामपीडां शोषय रं वदय कीदृशं प्रियपरिरंभणस्य ममालिंगनाय रभसोत्सहे न वलितमिव संमुखमिव पुनः कीदृशं संजातरोमांचं पुनः कीदृशं अति दुःखेन प्राप्यमेवेति दुरापं सजलकुंभस्पर्शेन तापशांतिर्युज्यतएव ॥४॥

अधरसुधारसमुपनय भामिनी
जीवय मृतमिव दासं त्वयि वि

निहितमनसं विरहानल दग्धव
पुषम विलासम् ॥५॥

त्वदेकजीवनं मान्त्वमेवजीवये त्याह अधरेतिहेभामिनि कामकुशलेत्वं अधरसुधारसं ओष्ठामृतरसं उपनय देहि अनेव दासं सेवकं मांमृतमिवजीवय कीदृशंत्वयिविनिहितमनसंद त्तमानसंपुनः कीदृशं विरहानलेन वियोगाग्निना दग्ध वपुःश रीरंयस्य अतएव विलासं निश्चलंयतस्तु निश्चलोभवति ॥५॥

शशिमुखि मुखरय मणिरसनागुण
मनुगुण कंठनिदानं मम श्रुतियुगुले
पिकरवविकलश्रमय चिरादवसा
दम् ॥६॥

चाटुकेन प्रसन्नांप्रत्याह शशीतिहेशशिमुखचंद्रवद ने त्वं मणिरसनागुणं मणिसुक्तं कांचीदाममुखरयशब्दितं कार यकीदृशं अनुगुणः सदृशः कंठनिनादोयस्यकंठगीतनादसदृ शमित्यर्थः तेनशब्देनत्वं मम श्रुतियुगुले कर्णयुग्मे चिरान्नववि रहेणायोवसादः स्वेदस्तंशमयनाशय स्वेद कारणमाह कीदृशे श्रुतियुगले पिकरुतैः कोकिलशब्दैर्विकलेदुःखिलेविरहिणी हि किमकरुतंदुःसहंभवति ॥६॥

मामतिविफलरुषाविफलीकृत
मवलोकितुमधुनेदं मीलितल
जितमिव नयनं नवचिरसविस
र्जति खेदम् ॥७॥

किंचिदवलोकयं नोमाहमामिति हे राधे तव इदं नेत्रं नय नं अधुना मामवलोकितुं दृष्टुं लज्जितमिव मीलतामिवद्यते कीदृशंमां अतिविफलरुषा अतिविफल कोपेन विफलकृतंदुः

खितं नयनविशेषणां ज्ञा विकलीकृतं कर्णांतरं प्रापितं अतएवको
पाद्दूरम विरक्ताभव शंतिस्वेदं क्रीडा दैन्यं विसृज्यपत्यजकोयं
त्यक्त्वा माया सहरमणं कुर्वित्यर्थः ॥ ७ ॥

श्रीजयदेवकवेरिदमनुपदनिग
दितमधुरिपुमोदम् जनयतुरसि
कजने षु तनोभरसिरसभावावि
नोदम् ॥ ८ ॥ इति श्रीगीतगोवि
दे त्रयो विंशतिमः प्रबंधः ॥

श्रीति श्रीजयदेवेनभाणित मिदं गीतं रसिकजनेषु
शृंगार रसलोकेषु मनोरमं मनःप्रीतिकरं रतिः संभोगः रसः शृं
गाररसः भावाः संचारि सात्विकादयस्तेतेषां विनोद कौतुकं
जनयतु उत्पादयतु कीदृक् प्राप्तमिदं अनुपमं पदे पदे निगादि तो
उक्तोमधुरियोः कृष्णास्यमोहो हर्षो यत्र गीते ॥ ८ ॥

श्लोक ॥ प्रत्यूहः पुलकांकुरेण
निविडाश्लेषेनिमेषेणच क्रीडा
कूतविलोकिते धरसुधापानेक
थाकेलिभिः आनंदाधिगमेन
मन्मथकलायुद्धेपियस्मिन्नभू
दुद्भूतः सतयोर्बभूव सुरतारंभः
प्रियंभावुकः ॥ १ ॥

इदानींसुरतारंभं निरूपयति प्रत्यूहइति तयोः राधकृष्णा
योः सः सुरतारंभः प्रियंभावुकः प्रियंभावितुलशीलं यस्यसः
उद्भूतः प्रकटोबभूवसकः यस्मिन्सुरतारंभेनि बिडाश्लेषे गाढा
लिंगने कर्तव्ये पुलकांकुरेणरोमोद्गमेन प्रत्यूहः विघ्नोऽभूत
व्यवधानभर्त्सीला द्रोमोद्गमस्य यस्मिन् सुरतारंभे क्रीडा ::

कृतविलोकिते क्रीडासु अभिप्राय पूर्वकं यद्दृष्टं लोकितं तस्मिन् कर्तव्ये निमेषेण पक्ष्म चलनेन मन्यूहो भूत्यस्मिन् नधरसुधा पाने ओष्ठामृत पाने कथाकेलिभिः मन्यूहोभूत् अपिसमुच्चये यस्मिन्मन्मथकलायुद्धे कामकलान्चित सुरत संग्रामे कर्तव्ये आनंदाधिगमेन आनंदप्राप्त्या मत्यूहो भूत् मौन्या आनंद प्राप्तिः

श्लोक॥ दोर्भ्यां संयमितः पयोध
र भरेणापीडितः पाणिजैः राविद्धो
दशनैः क्षताधर पुटः श्रोणीतटेना
हतः हस्तेनानमितः कचेधरमधु-
स्यंदन संमोहितः कांतः कामपि
तृप्तिमापत दहो कामस्य वामागति : ॥२॥

तदेव विपरीतारव्यं उक्तिवैचित्र्येण कथयति दोर्भ्या मिति कांतः कृष्ण कामपि अनिर्वचनीयां तृप्ति संतोषमापप्रापत् की दृशः कृष्णः दोर्भ्यां हस्ताभ्यां संयमितः बद्धः अर्थान्नायिकायाः पुनः की दृशः पयोधरभरेण स्तनभरेणपीडितः पाणिजैर्नखैः राविद्धः खंडितः दशनैः दंतैः क्षतमधरपुटयस्यसः पुनः की दृशः श्रोणीतटेन कटिमदेशेना हतस्ताडितः कचेकेशबंधे हस्तेन आनमितः नम्रीकृतः पुनः की दृशः अधर मधुस्यंदन अधरामृतरसेन मोहितः यत्क्रोधजनकं तदेवाति संतोषकारक मत एव कामस्य मदनस्य वामा विपरीतैवगतिरित्यर्थः ॥२॥

श्लोकः मारांके रतिकेलिसंकुलरणारंभे तया साहस प्रायं कांतजयाय किंचिदुपरि प्रारंभि यत्

संभ्रमात् निष्पंदा जघनस्थली
शिथिलिता दोर्वल्लिरुत्कंपितं व
क्षोमीलितमाक्षि पौरुषरसः स्त्री-
णां कुतः सिद्ध्यति ॥३॥

न देव पुनः कथयति मारो केइति मारा के मारां कसक्ष्वके
रति केलि संकुलरणारंभे सुरत क्रीडा तुमुल युद्धारंभै तया राधा
यायत्संभ्रमात् कांतजयापकृष्ण जयार्थं साहस प्रायं किंचिदुपारे
विपरीतरतं प्रारंभि आरब्धं न देव जघनस्थली निष्पंदाततदास्त
ब्धा जाता दोर्वल्लिभुजलता शिथिला जाता वक्षस्थलमपि कंप
युक्तमभूत् तथा अक्षि मे च युग्मं मीलितमभूत् अत एव स्त्रीभि
रति साहसात्मारब्धमपि पौरुषं कुतः सिद्ध्येन्नैव सिद्ध्यतीत्यर्थः

श्लोक ॥ तस्याः पाटल पाणिजां
कितमुरो निद्राकषाये दृशौ नि
र्धौताधरशोणिमा विलुलितस्रस्त
स्रजो मूर्धजाः कांचीदाम दरस्र
थाचलमिति प्रातर्निखातैर्दृशो
भिः कामशरैस्तदद्भुतमहो पत्युम
नः कीलितम् ॥४॥

तस्याइति एभिः पूर्वोक्तैः कामशरैर्यत्पत्युः स्वामिनो मनः
कीलितं विद्धं एतदद्भुतमाश्चर्यमभूत् कथंभूतैः कामशरैः प्रा
तः काले दृशो नेत्रयोर्निखातैरोपितैः इतीतिकिं तस्याराधा
याउरः पाटलपाणिजैः श्वेतरक्तनखैरंकितं चिह्नितं तस्या निद्राकषाये
निद्रालोहिते दृशौ नेत्रे तस्या निर्धौतः क्षालितः अधरशोणिमा अ
धर लौहित्यं तस्या विलुलिता माला स्रस्ताः शिथिलिताः स्रजो
माला येभ्यस्ते मूर्द्धजाः केशाः दरः ईषत् श्लथां शिथिलं अंचलं

वस्त्रं यस्यता हृष्टं कांची दाममेखला गुणाः कामपूरैः नखक्षतजा गर चुंबन केशाकर्षणनीवीमोचनानि पंचशराः निरूपिताः अन्य त्र नखवाते वीणेरन्य त्कीलितमित्यस्य पूर्य मित्यर्थः ॥४॥

श्लोक ॥ त्वामप्राप्य मयि स्वयंवर परां क्षीरोदतीरोदरे शंके सुंदरि कालकूटमपिबन्मूढो मृडानीपतिः इत्थं पूर्वकथाभिरन्यमनसो विक्षिप्य वामांचलं राधायाः स्तन कोरकोपरि लसन्नेत्रो हरिः पातु वः ॥ ॥५॥

त्वामप्राप्येति हरिः कृष्णः वः युष्मान् पातु कीदृशोहरिः राधायाः स्तनौ कोमलत्व पतितत्वादिना गुणेन कोरका विवरणो रुपरि चलंतौ संवद्धे नेत्र यस्य किं कृत्वा वामं चलं हृदय वामदेशल ग्नां चलं विक्षिप्य दूरि कृत्यः कीदृश्याः राधायाः इत्थं इति पूर्वकथा भिः अन्यमनसः कथादत्त चित्तायाइत्यर्थः कथामेवाह हे सुंदरि क्षीरोदरी रोदरे क्षीरसमुद्रतीरमध्ये मृडानी पतिर्महादेवस्त्वामप्राप्य कालकूटविषमपिबदित्यहं शंके तर्कयामि यतः मूढः ज्ञानरहितः की दृशीं त्वा मपि मान्नि मित्रं निमिते स स्वमीस्वयंवर परां मदेकपाते का मामित्यर्थः इत्थं पूर्वकथा अनेन गौरीपति त्वे पितवा लाभाद्विषम पियत् इति गौर्या अपि अधिक गुणेतिभावः ॥५॥

श्लोक ॥ व्यालोलः केशपाशस्तर लितमलकैः स्वेदलोलौ कपोलौ स्पष्टा दष्टाधर श्रीः कुचकलशरु चा हारिता हार यष्टिः कांचीकांचिद्गताशां स्तनजघनपदं पाणिनाच्छाद्य

सद्यः पश्यंती चात्मरूपं तदपि वि
लुलितंस्रग्धरेयं धिनोति ॥ ६ ॥

व्यालोल इति इयं राधा तदपि तथापि धिनोति प्रीणयति अ
र्थात् कृष्णं कीदृशी राधा पाणिनाहस्तेन जघनयोः पदं आभोग्यस
द्यः आच्छाद्य आत्मरूपं पश्यंती आत्मरूपमेवाह केशपाशो व्या
लोलः इतस्ततो विक्षिप्तो ऽभूत् अलकैः चूर्णकुंतलैस्तरलितं स्था
नाच्चलितं कपोलौ स्वेदेन घर्मजलेन लोलौ व्याप्तौ दष्टाधर श्रीः
खंडिताधरलक्ष्मीः स्पष्टा व्यक्ता कुचकलशरुचास्तनघटदीप्त्या
हारयष्टिः मुक्ताकलापः हारिता दूरीकृता कांची रशनाकांचीदा
शांदिशंगता चलिता यद्यपीति सर्वत्र योजनीयं स्रग्धरानामकं छंद
श्छन्दम् ॥ श्लोक ॥ ईषन्मीलितदृष्टि मुग्धह
सितं सीत्कारधारावशा दव्यक्ता
कुलकेलिकाकुविकसद्दन्तांशुधौ
ताधरं श्वासोत्कंपिपयोधरोपरिप
रिष्वंगात्कुरंगीदृशो हर्षोत्कर्षवि
मुक्तनिःसहतनो र्धन्यो धयत्याननं
॥ ७ ॥

ईषदिति कुरंगीदृशो हरिणनयनायाः आननं मुखं धन्यः
भाग्यवान् जनो धयति पिबति कीदृश्याः कुरंगीदृशः श्वासेन कामजनि
तेन स्वरपवनेन उत्कंपितौ किंचिच्चालितौ पयोधरौ स्तनौ तयोरुपरि
परिष्वंगात् आलिंगनात् यः हर्षोत्कर्षः हर्षाधिक्यं तेन विमुक्ता त्यक्ता सा
लसा अत एव निःसहा कार्यासमर्था तनुः शरीरं यस्याः परिष्वंगं कृत्वा आ
लिंग्य धन्यो धयति पिबतीति भावः कीदृशमाननं ईषन्मीलितदृष्टि
मुकुलितनयनं मुग्धं सुंदरं हसितं हास्यं यस्मिन् पुनः कीदृशी सीत्का
रधारावशात् कामविकारपरंपरावशात् अव्यक्ता आकुला याकेलिस्तत्र

स्यात्। काकुः। शोकभीत्यादिभिः ध्वनिविशेषस्तेनविकसंतः प्रकटीभवंतोयेदंतास्तेषांमयूखैः किरणैर्धौतःक्षालितःअधरोयस्मिन्

श्लोक। अथ सानिर्गता बाधारा
धारवाधीनभर्तृका निजगाद शंति
क्रांतकांत मंडन वांछया॥८॥इ
ति च सहसा मीतं सुरतांतेमाति ता
निखिलोगीराधा जगाद सादरमि
द मानंदेन गोविंद ॥९॥

अथेति अथानंतरं राधासुखांतरे आनंदेनगोविंदं कृष्णमिदं वक्ष्यमाणं सादरंनिजगाद कीदृशीसहसाईषद्धास्ययुक्तानिर्गता आसमंताद्भावेने बाधा कामपीडायस्याःसासुखे नाधीनःभर्ताप्रियो यस्याःसा किमर्थंनिजगादेत्यनआह मंडन वांछयाप्रियकर्तृकालंकरणवांछयेत्यर्थःतस्याः स्वाधीनभर्तृकायाःलक्षणंभरतशास्त्रे उक्तंसणं करहते नैवक्षणं चरणयातिने कंदुकेनेवकांतेनक्रीडेत्स्वाधीनभर्तृका कथंभूतं कृष्णं कांतंप्रियं कमनीयंसुदरंपुनः कीदृशंरतौसुरते क्लांतंपरिश्रांतं ॥८॥९॥

अथ चतुर्विंशतिमः प्रबंधो रामकरी रागेण यतितालेन गीयते ॥

कुरुयदुनंदन चंदनशिशिरतरेण
करेण पयोधरे मृगमदपत्रकमत्र
मनोभवमंगलकलशसहोदरे॥१॥
निजगाद सा यदुनंदने क्रीडति ह
दया नंदने ॥ ध्रुवपद ॥

यद्राधानिजगाद नंदवगीतेनाह कुर्वेतिरामकरी राग।
हृदयानंदने चित्तहर्षके यदुनंदने कृष्णेक्रीडतिसतिसाराधानिजगा

दउक्रवती किं निजगादेत्यत आहहे यदुनंदन कृष्ण त्वंमम अत्र स्मिन् पयोधरे करेण स्वहस्तेन मृगमद पत्रकं कस्तूरिकापत्रावली कुरु कीदृशेन करेण चंदनवच्छिशिरेण अति शीतलेन कीदृशे पयोधरे मनोभवस्य कामस्य मंगलाय कलशः पूर्णकुंभस्तस्य सहोदरे तुल्ये मंगलं हिरण्याय मितिवा ॥१॥

अलिकुलगंजनसंजनकं रतिना
यकसायकमोचने त्वदधरचुंब
नलंबितकज्जलमुज्ज्वलय प्रिय
लोचने ॥२॥

अलीतिहे प्रियकृष्ण त्वंलोचने मदीये नेत्र त्वदधराभ्यां चुंबनेनलंबितं गलितं कज्जलं उज्ज्वलय पुनरुद्दीपय कीदृशं कज्जलं आलिकुलस्य भ्रमरसंघस्य गंजनमभिभवं संजनयतीतिसंजनकं विधायकं कीदृशे लोचने रतिनायकस्या कामस्य सायकान् मोचयति तस्मिन् नयन कटाक्षप्रत्यविकाभासाद्यकाभोयाणान् मोचयतीतिभावः एवंप्रेरणय कामवाणंमुंचतीत्यर्थः ॥३॥

नयनकुरंगतरंगविलासनिरोध
करे श्रुतिमंडले ॥ मनसिजपाश
विलासधरे शुभवेषनिवेशाय कु
ंडले ॥३॥

नयनेति हे शुभतेषरुचिरालंकार कृष्ण त्वंमम श्रुतिमंडले कर्णप्रदेशे कुंडले निवेशाय कुंडलयुग्मंस्थापय कीदृशे श्रुतिमंडले नयने एव कुरंगो मृगस्तस्य तरंगविलासस्य उत्फालस्य कामस्य निरोधं करोतीति तथा पुनः कीदृशे मनसिजस्य कामस्य यः पाशस्तस्या विलासं शोभा सदृशं लीलां धारयतीतिपाशः पशुयम निरोधको भवतीति ॥३॥

भ्रमरचयंरचयंतमुपरिरुचिरंसुचि
रं ममसंमुखे जितकमलेविमलेप
रिकर्मयनर्मजनकमलकंमुखे ॥५॥

भ्रमरेतिहे कृष्ण मम संमुखे सुंदरमुखे अलकं केशपाशं परिकर्मय प्रसाधय मंडयेत्यर्थः कीदृशमलकं उपरि मुखोपरि सुचिरं बहुकालं व्याप्य रुचिरं भ्रमरसमूहं रचयंतं कारयंतं स्वजातीयबुद्ध्या भ्रमरास्तत्र पततीति भावः यद्वा मुखं कमलस्थानीयं कमले भ्रमरास्तिष्ठंतीत्युक्तं कीदृशे मुखे जितं कमलं येन तादृशे विमले निर्मले कीदृशमलकं नर्मजनकं क्रीडाकारकं ॥५॥

मृगमदरसवलितंललितंकुरुति
लकमलिकरजनीकरे विहितकलं
ककलंकमलानन विश्रमितश्रमसी
करे ॥५॥

मृगमदेति हे कमलानन कृष्ण त्वं अलिकरजनीकरे ललाटचंद्रे तिलकं कुरु मृगमदरसेन वलितं निर्मितं अत एव ललितं मनोहरं पुनः कीदृशे विहिता कृता कलंकस्यां कस्य षोडशभागो यत्र अथवा कलाषोडशभागो यत्र द्वितीया चंद्रमायां तिलकं कुर्वित्यर्थः कथंभूते अलिकरजनीकरे विश्रमिताः उपशांताः श्रमसीकाराः श्रमासजलकणा यत्र एतेन चंद्रोपि मकरंदलांछन कविर्हेषयन इति ॥५॥

ममरुचिरेचिकुरेकुरुमानदमनसि
जध्वजचामरे॥ रतिगलितेललिते
कुसुमानिशिखंडिशिखंडकडामरे
॥६॥

ममेति हे मानद मानखंडन मानदायक वा मम रुचिरे सुंदरे जात्येकवचनं कुसुमानि पुष्पाणि कुरु रचयेत्यर्थः कीदृशे चिकुरे मनसि

मिजस्य कामस्य ध्वजा चामरतुल्येपुनः कीदृशेरतिगलितेसुरत समयेमुक्तबंधनेपुनः कीदृशेललिते शृंगारचेष्टयायुक्तेपुनः कीदृशेशिखंडिनोमयूरस्यशिखंडकस्येवपिच्छस्येवडामरोयस्य आटोपो आडंबरमित्यर्थः ॥ ६ ॥

सरसघने जघने मम संवरदारण वा
रण कंदरे मणिरसना वसनाभरणा
नि शुभाशय वासय सुंदरे ॥ ७ ॥

सरसेति हे शुभाशय महोदाराशयतः त्वंममसुंदरेजघनेम णिरसनाभरणयुक्त घंटिकावसनानिवस्त्राणि आभरणानि अलंकरणानि वासय परिधानं कारय कीदृशेजघनेसरसः कामअंकः घनोनिविडश्चयस्मात्कर्मधारयः पुनः कीदृशेशंवरदारणः कामः सएववारणः कुंजरस्तस्यकंदरे वासस्थाने ॥ ७ ॥

श्रीजयदेववचसि शुभदे हृदयं स
दयं कुरु मंडने हरि चरणस्मरणामृ
तनिर्मितकलिकलुषज्वरखंडने
॥ ८ ॥ इति श्रीगीतगोविंदे चतुर्विंश
तितमः प्रबंधः ॥

श्रीजयदेवेति हे भक्तजन त्वंमंडने अलंकारभूतेशुभदेकल्याणप्रदे श्रीजयदेववचसि गीतरूपेहृदयंमनः सदयदयायुक्तंत्वरंकुर्वित्यर्थः कीदृशेवचसिहरि चरणस्मरणामृतेननिर्मितंकृतंकलिकलुषज्वरस्य कलिकृतपापरूपज्वरस्यखंडनंनाशोयेन ८

श्लोकः ॥ रचय कुचयोः पत्रं चित्रं
कुरुष्व कपोलयोर्घटय जघने का
ञ्चीम् स्रजा कबरीभरं कलयवल
य श्रेणीं पाणौ पदे कुरु नूपुरावि

त्तिनिगदितः प्रीतः पीतांबरोपित
थाकरोत् ॥ २॥

रचयेतिङ्ग्नेराधयानिगदितः उक्तः संतुष्टः पीतांबरोपि तथा करोत् इतिकिंहे कृष्णमम कुचयोः स्तनयोश्चित्रंचित्रविशेषं रचयकपोलयोः पत्रंपत्रावलिं करेण रचय कुरुष्वजघने कांचिंक्षुद्र घटिकां घटय अर्पयस्रजापुष्पमालया कबरीभरं केशपाशं अंच पूजय बंधनं कुर्वित्यर्थः हस्ते वलयश्रेणीं कंकणपंक्तिं स्थापय प दे चरणयोः नूपुरौ कुरु स्थापय गीतोक्तस्य संक्षेपार्थकथनेन दोषउक्तः ॥ १॥

श्लोकः ॥ पर्यंकीकृत नाग नायक फणा श्रेणी मणीनां गणे संक्रांत प्रति बिंब संकलनया विभ्रद्वपुर्वि क्रियां पादांभोरुह धारि वारि धि सुतामक्ष्णां दिदृक्षुः शतैः काय व्यूह मिवाचरन्नुप चितीभूतो ह रिः पातु वः ॥ २॥

पर्यंकीकृतेतिउपचितं समृद्धं आकूतं कामधावोयस्य सहरिः कृष्णः वः युष्मान् पातु कीदृशोहरिः वपुर्विक्रियादेहविक्रि यांशरीर परामित्यर्थः विभ्रद्धारयन् किंकुर्वन् पर्यंकीकृतः शय्यास्था नेकृतो नागनायकः शेषस्तस्यफणश्रेणी फणासमूहं स्तस्यमणय स्तेषांगणेसमूहेसंक्रान्तप्रतिबिंबं तत्प्रतिबिंबसंकलनया अन्वे येनास्थितइत्यर्थः कायव्यूहमिवबहुशरीरतामिवाचरन् कुर्वन् किं मितिकायव्यूहइत्यतआह पुनः कीदृशः पादाभोरुहं श्रीकृष्णच रणकमलं धारयतीतिधारिणीयावारिधिसुता लक्ष्मीस्तां अक्ष्णा मनोनैर्घ्यमहस्त्रैर्दिदृक्षुः द्रष्टुमिच्छुः लक्ष्मीदर्शनेनेत्रद्वयेन तथा न

वतीति कायव्यूहेननेत्रबाहुरूपात् ॥२॥

श्लोक॥ यद्गांधर्वकलासुकौशल मनुध्यानं च यद्वैष्णवं यच्छृंगारविवेकतत्वरचनाकाव्येषुलीलायितं तत्सर्वंजयदेवपंडितकवेः कृष्णैकतानात्मनः सानंदाः परिशोधयंतु सुधियः श्रीगीतगोविंदतः॥३॥

यद्गांधर्वेतिमत्जयदेवकवेः गांधर्वकलासुगानविद्यासुकौशलंपटुत्वंभावीराग्यमित्यर्थः अस्तीत्यध्याहारः यद्वैष्णवंविष्णोरनुध्यानमस्ति तथा शृंगाररसस्य योविवेकः संभोगविप्रलंभादिरूपेणयाद्विवेचनंतस्यतत्वंअर्थज्ञानंतस्यरचनासुलीलायितंक्रीडाविलाससर्वत्वंयद्लीलायितंशृंगारादिरसविभावनमस्ति तत्सर्वं जयदेवपंडितकवेः श्रीगीतगोविंदतः गीतगोविंदग्रंथात् सुधियः परिशोधयंतु विवेकिनः विचारयंतु सर्वतोभावेन पुष्टंकुर्वंत्वित्यर्थः कीदृशस्य जयदेवपंडितकवेः कृष्णैकतानात्मनः कृष्णपरायणस्येत्यर्थः जयदेवपंडितः शास्त्राध्यापकः कविः काव्यकर्ता चेतिजयदेवपंडितकवेः श्रीशब्दस्तु ग्रंथांते मंगलार्थे ॥३॥

श्लोक॥ श्रीभोजदेवप्रभवस्यराधादेवीसुतश्रीजयदेवकस्य पराशरादिप्रियवर्गकंठे श्रीगीतगोविंदकवित्वमस्तु ॥४॥

श्रीभोजदेवेति पराशरादयः कविश्रेष्ठास्तेषांवर्गो गोष्ठी तस्यकंठेगलदेशे अस्तुतस्य श्रीगीतगोविंदकवित्वंभोजदेवप्रभवस्य भोजदेवोत्पन्नस्य तथाराधादेव्याः सुतस्यैनेन स्वपितृप्रतिपादनेनमंगलमाचरितंनिजग्रंथेआशीरपिदत्तेतिराधास्मरणात् आन

युक्तताद्योतिना ॥ ४॥

श्लोक॥ साध्वीमाध्वी कचिंता न भवतिभवतः शर्करे कर्कशासि द्राक्षेद्रक्ष्यंति के त्वाममृतमृतमसि क्षीरनीरंरसस्ते माकंद क्रंद कांताधरधरणितलं गच्छ यच्छंतिभावे या वच्छंगारसारस्वतामह जयदेवस्य विष्वग्वचांसि ॥ ५॥ इति श्री कविराज श्रीजयदेव पंडित कृतौ गीतगोविंदे महाकाव्ये प्रीत पीतांबरोनाम द्वादसः सर्गः ॥

माध्वीति विष्वक्सर्वत्र यावच्छृंगारसारस्वतंभावं जयदेवस्यव चांसियच्छंति तावत्हे माध्वी कमद्यो भवतस्यवमधुरमहमिति चिंतासाध्वीनभवतिहे द्राक्षे त्वांके द्रक्ष्यंत्यास्वाद्यंति अमृत मृतमसिहे क्षीर नीरंरसस्तेमाकंद क्रंद आक्रोशं कुरुकिंचहेकांताधरत्वंपातालंगच्छ श्रीजयदेवकाव्यमधुराख्यभगवद्रसास्वादनिर्वृताजनास्त्वदेकनिष्ठाःसंतः एतेषांतिरस्कारं करिष्यंतितीभाव॥ ५॥

लक्ष्मीदासस्तनूजेनभीष्मदासेन धीमता कारिनागीतगोविंदटीकेयं सुखदास्तुवः॥ १॥ भीष्मदासनियुक्तेन कृष्णापत्यात्मसेविना नारायणेनसुकृतं गीतगोविंदटिप्पणं॥ २॥ टिप्पणीचेन्मदीयेयं सर्व लिखितस्यास्मसाहतः नत्तके व्यो ममा

दोपो गंतुर्हंसवलितंभषेत् ॥३॥ ११ ॥

इतिगीतगोविंदं काव्यंसटीकं

समाप्तम्



# अथराधाविनोद काव्यं प्रारभ्यते

श्लोक ॥ माली नोधन माली मा
ली नो वन माली ॥ माली नोवन
माली मालीनो वतु माली ॥ १ ॥

श्रीगणेशायनमः ॥ श्रीराधाकृष्णाभ्यानमः ॥ पितृ व च
नमवधृत्य मेव पाल्यं जगानि जनाने तिधृणासितुं वनांतं गनमतिकरुणारम्य
दूषितं रघुपतिमेवपुष्पसमहेसदारं ॥ २ ॥ राधाविनोदाख्यकाव्यं चिकीर्षु
र्निर्विघ्नमारोप्सितसमाप्तिकामो रामचंद्रकविः परमेश्वरप्रार्थनारूपंमंगल
माचरति वनमाली वनमाला आयादत्तंविनोमाला तद्वान्विष्णुः आपा द
त्वांविनोमालांवनमालांविदुर्बुधाः इत्यभिधानात् नोस्मान् ग्रंथकर्तृन
श्रोतृन्वा अवतुरक्षतु कीदृशः मालीनाः मालक्ष्मीः मा तुलक्ष्म्यांचमापा
यांचेत्ये कारवरः दर्पणइव हृदिलग्नायस्यसः यद्वा मायालीनो लोक परंप
रयाकामाकामाद्युत्पादनेनतदासक्तइत्यर्थः एतादृशः पुनः कीदृशः माली
नः मायां मायांया अलीन निरंजननिराकार त्वानस्यामसक्तः मापांलस्म
अलीनः मातुलीनामतुनोसक्त इत्यर्थः एकोदामोनत्वात्पुनः किंभूत
मांशोभां अलीतिव्रजांतेनेमालयः यदुगोपास्यस्तेषांइनः स्वामीइनः म
र्येमयौ राद्विमृगांके क्षत्रियेनृपइतिविश्वः यद्वाभालं तच्छोभंते मालिनः
इंद्रादयः तेषांइनः स्वामीईश्वरेश्वरइत्यर्थः पुनः कीदृशः मालीनः माला
पुष्पस्रक सायस्य अस्तीतिमालोमुदामानस्यइनः स्वामीमारणेरघभंजनतद्वान

यद्वामेशिवे अलीनः तदभिन्नत्वात् यद्वामः वेधास एव अलिः अमला
नुषंगित्वात् भृगौ यस्यं तस्य इनः मः प्रिवश्चं द्रुमा वेधा दन्येकाक्षरः पुनः
कीदृशः घनमाली घनवत् श्यामइत्यर्थः पुनः कीदृशः वलमालीवल
भद्रेण मालते सौ वलमाली परसामर्थ्यवान् पुनः कीदृशः माली मालायु
ष्पस्रक् सा यस्यास्तीति माली पुष्पस्रग्वानित्यर्थः यद्वामा अलीति पद
छेदः कर्त्तव्यः कीदृशः अली अलति सर्वं व्याप्नोतीति अली परमात्मरूपे
ण सर्वान्तर्यामीत्यर्थः विश्वव्यापीत्यर्थः ॥१॥ अथ दशावतार वर्णः

नमारभतेवनजोवनजौरववोस्त्वेरामोस कृपो कृपः अवनाशादशौवैतेकृ
ष्णस्तु भगवान् स्वयं ॥१॥ वनमाली वने जले मालते शोभत इति वनमा
ली वने सलिल कानने इत्यमरः मत्स्यरूपी विष्णुः नो अवतु कीदृशः व
नमाली वनेन शंखासुरोन्मूलनकरणेन वलेन मालते सो पुनः वन मालीकू
र्मरूपो विष्णुः नोस्माकमवतु कीदृशः वनमाली सकलभूभारेण निष्पं
दफणामंडलानंतोद्वहनकरणेन वलेन मालते सौ पु० व० वनेरण्ये मा
लते सौ० वराहरूपो विष्णुः नोवतु० को० व० सागरनिमग्न मही मंडलो
द्धरणकरणेन मालते पुनः वनमाली नृसिंहरूपी विष्णुः नो वतु को० व०
हिरण्यकशिपुसमुच्छेदकरणेन वलेन मालते सौ पुनः अघनमाली अइव
रुद्र इव घनं यथा तथा मालत इति अघन माली अद्वा अघमं -ह्रस्वं
मालीवामनरूपो विष्णुः नोवतुः को० व० वलेन वलिछलनकरेण न
मालते सोपुनः वनमाली रुद्र स्वर्यानत्वात् तीर्थार्थं वने परिभ्रमन् जामदग्न
रूपी विष्णुः नोवतु को० व० सकलक्षत्रियोत्पाटनकरणेन वलेन मालते
सौ पुनः वनमाली दण्डकारण्यप्रदेशे रामरूपी विष्णुः नोवतु को० घनमाली
घनवत् श्यामः पुनः को० व० पौलस्त्यादि छुच्छेदकरणे नमालते सौ को० व०
वलरामेति सरामपदेन मालते सौ वलभद्ररूपो विष्णुः नौवतु कीदृशः व
लमाली कालिंदीकर्षणेन वलेन मालते सौ को० व० घनमाली शरदंशुद
गौरः पुनः अवनमाली अघनेन रक्षणेन मालते सौ बुद्धरूपी विष्णुः नो व०

तु की०व० मारायहिंमादिकरणेन मालते सौ पुनः की०व० वलेन
स्तेनं छो छेदन करणेनमालते सौ काल्किरूपी विसुः नोवतु अथ
संमोहनकाममंत्रोद्धारणपक्षमाह संमोहनकाममंत्रमयरूपोहरिः नोवतु
मंत्रमयत्वंविशिष्टिनाष्टिमालीनःमाघुक्तिःसामान्यस्वरास्तेषु आलीनः क
कारःतद्भृतत्वेनैवोच्चार्यमाणत्वात्प्रथमःत्यागे कारणभावात्द्वितीयाये
न ककारोग्राह्यः तथाचककारात्मकइत्यर्थः घनमालीघनेनमायस्यस
घनमः इंदुः तस्यइंदंबीजं घनमंतं द्दलतीति घनमालीतथा वलकारात्म
कइत्यर्थः मालीनः माया: इदंतास्मिन्इकारे अलीनःपुनः मालीनः मः
चंद्रः अलीनो अस्मिन् असौतद्धक्तं शारदातिलके ब्रह्माभूम्यांसमा
सीनः शांतिबिंदुविभूषितः बीजंमनोभुवः प्रोक्तं जगत्त्रितयमोहनं ॥ २॥

श्लोक ॥ विधुसुरहविरहानलपीडिता
विधुसुहृत्तरलानिलपीडिताविधुसु
हृद्वदनालिमपीडिताविधुसुहृत्सु
गिरोकिरदीडिताः ॥ २॥

विधुसुहृदिति विधुसुहृत्विधुः विष्णुः सुहृत्प्रियोयस्याः सा
राधीकाविधुश्चंद्रमसिविष्णौविधुः कर्पूरकामयोरितिविश्वः अलिसखी
भिर्ईडिताः स्तुत्याः सुगिरः आंकिरत्उवाचेत्यर्थः कीदृशीविधुसुरवि
रहानलपीडिताः विधुः विष्णुः सएवसुहृत्प्रीयाः तस्यविरहः वियोगः
सएव अनलवन्हिः तेनपीडितापुन कीदृशी विधुसुहृत्तरलाविधुश्चं
द्रस्तस्यसुहृन्मन्मथः तेनतरलाचंचलाचं चलं तरलं चैवश्यारिष्लवप
रिष्लवइत्यमरः यद्वाविदुः कर्पूरः तस्यासुहृत्समस्तलोहारमध्यम
णिर्यस्याः सातरलः स्यान्मध्यगोमणिरितिप्रणम्घतः कामज्वरशांति
स्तेजस्कमुक्ताइत्यमरः पुनः कीदृशी आनिलपीडिता आनेलोमलाया
निलः तेनपीडितापुनः विधुसुहृद्वदनाविधोश्चंद्रस्यसुहृत्सुमंतु
ल्यंवदनंयस्याः साविरहसमयत्वान्चेद्रसाम्यंस्फुट मेलगरुः कर्पूर

पांडुरवदना पुनः कीदृशी ईडितास्तुत्याः पुनः कीदृशी अपीडिता एन कृष्णेन पीडिता अपीडिता यद्वा अपि इडिता श्लेषे दच्छेदः कर्तव्यः कृष्णविरह पीडितेत्यर्थः ॥२॥

श्लोक॥ उदयते दयते मे मतिरा करैः प्रगुणाकरैरकरैस्तिमिराकरैः॥ दिश मिमां चरमां चरमारमं कमलकोमल लोलल लोचना ॥ ३॥

उदयत इति हे सखि शशी चंद्रः उदयते चपरं करैः इदानीं वर्तमानां दिशं दयते माप्नोति कृपयतीत्यर्थः दयत्यपित्वे हेतुमाह कीदृशैः करैः तिमिराकरैः तिमिरस्य अकरैः अकर्तृकैः यद्वा तिमिरं असमंतात् किरंति संतीति तिमिराकरैः नक्षत्रध्वांतनाशकैरित्यर्थः चपरं करैः मां दयते पीडयतीत्यर्थः दयादानगतेहिंसादर्शनेषु भौवादिकः पीडनत्वमाह कीदृशैः करैः अकरैः अकं दुःखं शांति ददातीति दुःखदैरित्यर्थः यद्वा कं जलं रांति स्वीकुर्वंतीति कराः न भवंतीति अकरास्तैरुष्णैरित्यर्थः अतस्त्वं रमारमं लक्ष्मीकांतं प्रति चर गच्छ सः रमासक्तोस्ति अलं सना गमिष्यति कीदृशं रमारमं कमलकोमल लोलल लोचनं लुप्तेनेत्रलो लं लोलत्वं लानः ते लोलले कमलं सरोजमिव पक्षे एवा सहव कोमले मनोहरे लोलले चंचले लोचने यस्य तं यद्वा कीदृशः प्रगुणः अंकमलकः अंकः कलंकः स एव मलो यस्मिन् तदं कमलं कं यद्वा यस्य सः एतत्प स्ये कीदृशं रमारमं लक्ष्म्या कोडितं यद्वा चरमां दिशं अस्तामवस्थाद यते प्राययति पुनः कीदृशं रमारमं लक्ष्मीरमं यद्वा शशी कलंक के सुरवेक सलकः दुःखद इत्यर्थः ॥३॥

श्लोक॥ कुमुदबंधुरबंधुरबंधुरः सतनुः तं तनुते तनुतेतमः हिमकरो हिमकः॥४॥

तां हे सखि धनार्कि मनुमासह दृशा सहृशाचे घोः

धि विराध करषि शोक हस्यो पञ्चवटी पावन राघव कियस्सूर्पनखा
कुरूप कीन्ही खर दूषण संहार कपटमृग गृद्धराज कहँ गति दीन्ही
हति कबन्ध सुग्रीव सखा करि भेदे ताल बालि मार्यो वानर कपि स
हाय अनुज संग सिंधु बांधि यश विस्तार्यो सकुल पुत्र दल सहि
त दशानन मारि अखिल सुर दुख टार्यो परम साधु जिय जानि
विभीषण लङ्कापुरी तिलक सार्यो सीता अरु लक्ष्मण सङ्ग ली
है श्री... जय ने दास आये नगर निकट विमान आयो जब नर नारि दे
...ये शिव विरञ्चि शुक नारदादि मुनि अस्तुति करत विम·
...ही चौदह भुवन चराचर हर्षित आये राम राजधानी मिले
...जननी पुर परिजन चाहन परमानन्द भरे दुसह वियोग जनि
...त राम चरण देखन विसरे वेद पुराण विचारि लगन
...भिषेक कियो तुलसिदास जिय जानि सुअवसर
...लियो ३१ इति श्री रामगीतावल्यां उत्तरकाण्ड
...श्रीवल्लभो जयति श्रीराम मे न भजु परमान·
...सर्व ले न्यारो ... पतील गोलीन अज अरूप
...बल निर्मल अनर्थ ... रिरूप भक्त अभि
...करी विरद की रीति बाल चरित सु... पितु पालि...
म प्रीति मुनि मख राखि तारि तापस तिय भू...
जि चांप मुनि मान व्याह करि सकल भान ममी...
वध सब जग भनत तुलसी गीत १ अद्भुत चरित...
श्री नृप अभिषेक राम को सब समाज निरमयो कुब...
बोधी तेहि गह भूप गयो भइ प्रतिकूल भूप तें रघुपा...
...न पठयो तमसा तरि निषाद संग सुरसरि तरि प्रयाग... नाना वचन ना...
...नि गण दरश विशाष शिष लैगे चित्रकूट वसयो पि... नयन कीन्हो सुरपं...
...पनित नत जि सुर पुर वास ठयो गुरु समति...

...नाते·
...लीं व
...ननी तेज
...क कीनिच
...सी भरत
...यनिहारे च
...तार अनुज
...हु बधि मख
...पति विश्व
...जन...

वोलि कै भूपनिदा हृदयो मानिगलानि भरत संग पुर जन राम समा
गमयो विनय भक्ति बल पाइ पादुकानन्दिग्राम सुथयो तुलसी
भरत सुयश रवि प्रगट्यो कुल कलंक अघ गयो २ विचरत विपि
न वि विविधि रघुराई मुनिगण अभय किये प्रण करि दृढ वधि
विराध दुखदाई हति कवंध वसि पंचवटी तहं सूर्पनखा कुटिल
ई करि कुरूप पठई षर दूषन आइ लरे गति पाई जाइ दशानन
सों कहि पठयो कपट कुरंग वनाई छलि करि हरि जानकी विराप
नि कीन्ही प्रवल लराई भे विनु पंष राम मिलि सुधि दै तुलसी सुग
ति वनाई ३ रघुपति कपिपति भेट भई करि दृढ प्रीति वालि वधि
सुख लै पठई कपि कटकई सिंधु निकट संपाति समागम ह
लंक लई सीता दरश दाहि हाटकपुर सब सुधि प्रभुहिं दई
दै लै अव मान विभीषण तुलसी शरण दई ४ रघुवर सेतव
सागर वालिसुपूत दूत पठयो लषि वल वुधि नीत उजाग
हि अंगद कौं आयो हितु तव हो को गागर सुनत हं सो
रोप्यो टरयो न गोल घु तागर रावण सभा तेज लै तुलसी
स्यो नागर ५ खेलत वसन्त कपि जातुधान लरि गि
जीति मान मेघनाद कर शक्ति तान लगि लषन वि
निदान भेस चेत हत्यो ताहि आनकुंभकरण मरयौ राम वाण अभो
रि दशानन वल अमान बहु खेल खेला रण राम जान दश दश शि
रे विशिष भान वरषि सुमन सुर करै गान मिलि तुलसी भूजा
जान ६ रघुवर समुझि भरत विकुलाई वेगि विमान साजि
निच ले औधनियराई पौनकुमार जाइ सुधि दीन्ही
भाई सुखी मातु पुर जन गुरु वेगहि राजतिलक सुख।
मंगल मुदित सकल जग सुव सव से रघुराई इति संधौः

श्री समाप्तम् जीवन वहुराकोटदो॰ तुलसी कृत गीता

हित चित लाइ किये विधि व्यवहार मुनिवर विप्र वृन्द बुलाइ कह
त सब ऋषि कृपा के फल भयो आजु अघाइ सुरुष ऋषि सुष सुत हि
को सिय सुखद सकल सहाई मूल राम सनेह को तुलसी न जिय तें जा
इ ३२७ मुनिवर करि छटी कीन्ही वारहें की रीति वन वसन पहिराइ
तापस तोषि पोषे प्रीति नामकरण सुअन्न प्राशन वेद वांधी नीति·
समय सव ऋषिराज करन सभाज साज समीति वाल लालहि
कहहि करिहें राज सव जग जीति राम सिय सुत गुरु अनुग्रह उ
चित अचल प्रतीति निरषि वाल विनोद तुलसी जात वासर वीति
पिय चरित सिय चित चितेरो लिखत नित हित भीति ३२८ वालक
सिय के हरत मुदित मन दौ भाइ नाम लव कुश राम सिय अनुह
रत सुन्दरताइ देत मुनि शिशु खेलौना ले ते धरत दुराइ खेल खे
लत नृप शिशुन के वाल वृन्द वोलाइ ∴ भूप भूषण वसन वाह
न राज साज सजाइ वरम चरम कृपाण शर धनु तूण लेत वनाइ दु·
खी सिय पिय विरह तुलसी सुखी सुत सुख पाइ आंच पय उफनात·
सींचत सलिल ज्यों सकुचाइ ३२९ कैकेयी जौ लौं जियत रही तौ लौं व
न मात सों मुह भरि भरत न भूलि कही मानी राम अधिक जननी ते ज
ननि हु गस न गही सीय लषण रिपुदवन राम रुष लखि सब की निव
ही लोक वेद मर्य्याद दोष गुण गाति चित चषु न चही तुलसी भरत स
मुझि सुनि राषी राम सनेह सही ३३० राग रामकली रघुनाथ निहारे च
रित मनोहर गावहि सकल अवधवासी अति उदार अवतार मनुज व
पु धरे ब्रह्म प्रभु अविनाशी प्रथम ताडिका हति सुवाहु वधि मख र
ष्यो द्विजहितकारी देखि दुखी अति शिला शाप वश रघुपति विप्र
नारि तारी सव भूपनि को गर्ब हर्यो हरि भंज्यो शंभु चाप भारी जन
कसुता समेत आवत गृह परशुराम अति मद हारी तात वचन तजि
न काज सुर चित्रकूट मुनि वेष धर्यो येक नयन कीन्हो सुरपति

दुसहसासतिसह कोहनुमानज्यायोजाय हेतु हौंसियहरणकोत
व अवकुंभयोसहाय होतहठिमोहि दाहिनोदिन दैवदारुणदा
य तजौनतनुसंग्राम जेहिलगि गृद्ध पक्षीजटाय ताहि हौं पहुंच
य कानन चल्यो अवधसुभाय घोर दरपकठोर करतवस ज्योंहो
विधिवाम दासतुलसी जानिराख्यो कृपानिधिरघुराय ३२४ पुनि
नसोचिये आई हौं जनकगृह जियजानि ॐ कालिहीकल्याण
कौतुककुशलतवकल्याणि राजऋषि पितुश्वसुर प्रभुपतितूसु
मङ्गलखानि ऐसेहू थलवामता वडि वामविधि कीवानि वोलि
मुनि कन्या सिखाई प्रीति गति पहिचानि आलसिहि की देव
सरिसियसेइ यहुमनमानि हाइ प्रातहि पूजिवो वरविटपि अभि
मतदानि सुअन लाहु उछाहु दिन दिन देखि अनहितहानि पाप
तापविमोचनी कहि कथा सरस पुराणि वालमीक प्रबोधि तु
लसी गई गरुइ गलानि ३२५ जब ते जानकी रही रुचिर आश्रम
आइ गगन जल थल विमल तबतें सकलमङ्गल दाइ निरस भू
रुह सरसफूलत फलत अति अधिकाई कन्दमूल अनेक अङ्कु
स्वाद सुधालजाइ मलयमरुत मराल मधुकर मोर पिक समुदा
इ मुदितमन मृग विहग विहरत विषम वयर विहाइ रहत रविअ
नुकूल दिन शशिरजनि सजनि सुइ सीयसुनि सादर सराहति सि
खिहलोमनाइ मोद विपिनविनोद चितवत लेत चितहि चोरा
इ राम विनु सियसुखद वन तुलसी कठिन कहगाइ ३२६ शुभदिन
शुभघरी नीको नखत लगन सुहाइ पूतजाये जानकी है मुनिवधू
उठिगाइ हरषि वरषत सुमन सुरगह गह वधाइ वजाइ भुअनका
नन आश्रम निरहे मोद मङ्गल छाइ तेहि निशा तहं शत्रुसूदन है
धिवस आइ मागि मुनि सों विदा गवने भोर सो सुखपाइ मातु
वाहिन हंते सासुने अधिकाइ करहि तापसती यतन यासाम

इ प्रियानिज अभिलाखरुचि कहि कहहिं सियसकुचाइ प्रियतनयस

मेत तापस पूजिहौंवन जाइ जानिकरुणासिंधुभावी विवशसकलस

हाइ धीर धरि रघुवीर भोरहिंलियेलषणबुलाइ तात तुरतहिं सा·

जिस्यन्दन सीय लेहु चढाइ वालमीक मुनीश आश्रम आइये पहुंचा

इ भलेहिनाथसुहाथमाथेराखिरामरजाइ चले तुलसीपालिसेव

क धर्म्म अवधि अघाइ ३२० आये लषन लै सौंपी सिय मुनीशहि·

आनि नाइशिररहे पाइ आशिष जोरि पंकज पानि वालमीक

विलोकि व्याकुल लषण गरलगलानि सर्व विद वूझत न विधि

कीवामतापहिचानि जानि जिय अनुमानि रहि सियसह सविधिस

नमानि राम सद्गुणधाम परमितिभई कछुकमलानि दीन वन्धुद·

याल देवर देखि अति अकुलानि कहति वचन उदास तुलसी दा·

स त्रिभुअनरानि ३२१ तौलौं वलि आपही कीवी विनय समुझि सु·

धारि जौलौं हौंशिषि लेउ वन ऋषि रीति वसि दिन चारि तापसी

कहि कहा पठावति नृपति को मनुहारि वहुरि तेहि विधि आइ

कहिहै साधु कोउ हितकारि लषण लालु कृपालु निपटहि डारि

दीन विसारि पालिवी सबतापसनि ज्यों राजधर्म्म विचारि सुन

त सीता वैन मोचन सकल लोचन वारि वालमीक न सके तुलसी·

सो सनेह संभारि ३२२ सुनि व्याकुल भये उतरु कछु कह्यो न जाइ

जानि जिय विधि वाम दीन्ही मोहि सरुष सजाइ कहत हिय मेरी

कठिनई गई दीनि लजाइ आजु औसर ऐसहू जौन चले प्राणव

जाइ इतहि सीय सनेह संकट उतहि रामरजाइ मौन हो गहि चर

ण गवने शिष सु आशिष पाइ प्रेमनिधि पितु को कह्यो मैं परुष

वचन अघाइ पाप तेहि परिताप तुलसी उचित सहे सिराइ ३२३

गौने मौन ही बार बार परि पाय जात जनु रथ खींच लक्ष्मण मन

रपछिताय असन विनु वन वरम विनु रण वच्यो कठिन कु

राहत निरषि सुखमा कन्द जिनके अलिचखु गियनराम मुखार
विन्द मरन्द मध्य व्योम विलम्बि चलन दिनेश उडगण चन्द राम
पुरी विलोकि तुलसी मिटत सव दुख दन्द ३१६ रागसोरठ पालत
राज यों राजा राम धर्म्मधुरीण ॥ सावधान सुजान सव दिन रह
त नय लयलीन ॥ स्वान खगपति न्याय देख्यो आपु वैठि पवीननी
चहनि महि देव वालक किये मीचविहीन भरत ज्यों अनुकूल ज॰
गनि रुपाधि नेह नवीन सकल चाहत रामही ज्यों जल अगाध॰
हि मीन ॥ गाड राज समाज याचत दास तुलसी दीन लेहु निजक
रि देहु निज पद प्रेम पावनि पीन ॥ ३१७ ॥ रागकेदारा ॥ सक
हू सुकृत को सोचत जनि जियरघुराउ ॥ सहस द्वादश पञ्चशतमे
कछु कहे अव आउ भोग पुनि पितु आपुको सोउ किये वनैवना
उ ॥ परिहरे विनु जानकी नाहि और अनघउपाउ ॥ पालिवे अ
सि धारव्रत प्रियप्रेम पाल सुभाउ होइ हित केहि भांति नित सुविचा
रिनहि चित चाउ निपट असमञ्जसहु विलसत मुख मनो॰
हरताउ परमधीरधुरीण हृदय कि हरष विसमय काउ अनु
जसेवक सचिव है सव सुमति साधु सखाउ जान को उ मजा
नकी विनु अगम अलख लखाउ राम योगवत सीय मन प्रिय
मनहि प्राणप्रियाउ परम पावन प्रेम परमिति समुझि तुलसीगा
उ ३१८ राम विचारिकै राखी ठीक दै मन माहि लोक वेद सनेह पाल
त पल कृपालहि जाहि प्रियतमापति देवता जेहि उमा रमा सिही
हि गुर्विनी सुकुमार सिय तिय मनसमुझि सकुचाहि मेरेही सुख
सुखी सुख अपनो सपनेहु नाहि गेहिनी पुनि गेहिनी गुण सुमिरि
सोच समाहि राम सीय सनेह वरणत अगम सुकवि सकाहि रीति
निरह सुतुलसी कहत राम कृपाहि ३१९ चरचा चरनि सों चर
नमारी रघुराइ दूत मुख सुवि लोक धुनि घर घरनि वूझी आ